॥ श्रीः ॥

काशी संस्कृत ग्रन्थमाला
१७९

कात्यायनाचार्य-प्रणीतं

# शुक्लयजुःप्रातिशाख्यम्

अथवा

## वाजसनेयि-प्रातिशाख्यम्

तच्चैतत्

श्रीमती इन्दु रस्तोगी, एम० ए०,

इत्येतया प्राचीनहस्तलिखितपुस्तकानामाधारेण पर्यालोचनपुरःसरं संपादितम्, इदम्प्रथमेन आङ्गलभाषानुवादेन च समलंकृतम्

प्राक्कथन-लेखकः

विद्यामार्तण्डो

डाक्टर मङ्गलदेव शास्त्री

वाराणसेय-संस्कृत-विश्वविद्यालयस्य पूर्वोपकुलपतिः

चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१

१९६७

THE
KASHI SANSKRIT SERIES
179

****

# THE
# S'UKLAYAJUḤ-PRĀTIS'ĀKHYA
# OF
# KĀTYĀYANA

Critically edited from original manuscripts
with
English translation of the text

By
**SHRIMATI INDU RASTOGI,** M. A.

*With a Foreword*

By
**Dr. MANGAL DEVA SHASTRI,**
M. A., D. Phil. ( Oxon. )
*Ex-Vice-Chancellor,*
*Sanskrit University, Varanasi.*

THE
CHOWKHAMBA SANSKRIT SERIES OFFICE
VARANASI-1
1967

# FOREWORD

*I am happy that the critical edition of the Śukla-Yajuḥ-Prātiśākhya ( or the Vājasaneyi-Prātiśākhya ), together with its first English Translation, which was lying with Mrs. Indu Rastogi, my daughter, for so long, is about to be published soon. It was on my own advice that in 1955 she undertook this important work. She worked on the subject for about two years under the guidance and supervision of both myself and Dr. Surya Kant, the then Head of the Sanskrit Department, Banaras Hindu University. The idea was to extend the work in course of time so as to cover a critical edition of the Commentary of Uvaṭa on the same Prātiśākhya. It is at my suggestion that she has decided to publish the present work. I hope the critical edition of Uvaṭa's Commentary on this Prātiśākhya will also be published as early as possible.*

*The importance of the Śukla-Yajuḥ-Prātiśākhya need not be emphasised here. It is as important for the textual study of the Vājasaneyi-Yajurveda-Saṁhitā as the Ṛgveda-Prātiśākhya is for the same sort of study of the Ṛgveda-Saṁhitā. Besides, its detailed treatment of the Pada-text is an additional point in its favour. It is for such reasons that the author of the Prātiśākhya, while concluding the treatise, rather proudly asserts* **"इत्याह स्वरसंस्कार-प्रतिष्ठापयिता भगवान् कात्यायनः"** *( VIII. 68 ). Mrs. Rastogi has taken every care in preparing the present edition along with the first English translation of the Sūtras. I am sure the work will be well received by the learned pubilc, especially by those interested in the Prātiśākhya literature.*

*Prachya Anusandhana Parishad,*
*Englishia Line,*
*Varanasi–2,*
*1–7–1967.*

**Mangal Deva Shastri**

# PREFACE

I am glad to bring before the learned public this critical edition of the Śukla-Yajuḥ-( or Vājasaneyi- ) Prātiśākhya of Kātyāyana, together with its first English Translation. It was lying with me ever since 1957 when I completed it as a part of a more comprehensive work as a research scholar of the Banaras Hindu University. I am deeply indebted to Dr. Surya Kant, the then Head of the Sanskrit Department, Banaras Hindu University, and Dr. Mangal Deva Shastri, my father, for the valuable guidance and supervision I received from them. The present work is being published at the suggestion of my father, which, I have no doubt, will be welcomed by scholars. The detailed introduction to the work has been kept in abeyance till the whole work comprising the critical edition of Uvaṭa's Commentary on the Prātiśākhya is completed, as the introduction will necessarily have to deal with the topics concerned with that Commentary also. I hope it will not be long before that commentary is published together with the detailed introduction and additional notes etc.

This edition of the Vājasaneyi-Prātiśākhya is based on three Text MSS., named here as $S^1$, $S^2$, $S^3$ respectively, and two Commentary MSS., named as $B^1$ and $B^2$. All these MSS. belong to the Manuscript Section ( Sarasvatī Bhavana ) of the Varanaseya Sanskrit Vishva-Vidyalaya Library, Varanasi. A brief description of the MSS. ( all on paper ) is as follows :—

$S^1$. It represents MS. No. 2125 of the Sarasvati Bhavana Library. Called कातीयप्रातिशाख्य, the MS. contains folios : 1–13. Size : 9″ × 3. 9.″ Lines per pages : 9. Letters per line : about 38, Hand-writing : fair Deva-nāgarī script. Date : not given. By appearance the MS. may be about 200 years old, with marginal corrections in a later hand. It is complete and represents a fairly correct text of the Prātiśākhya.

It begins :—श्रीगणेशाय नमः। जपादौ नाधिकारोस्ति सम्यक्पाठम-जानतः॥ प्रातिशाख्यमतो ज्ञेयं सम्यक्पाठस्य सिद्धये। स्वरसंस्कारयोश्छंदसि नियमः etc.

It ends :—इति प्रातिशाख्ये कातीये अष्टमोध्यायः समाप्त ॥ श्री ॥ श्री.

The colophons of the MS. are generally like :—इति प्रातिशाख्ये प्रथमोध्यायः.

On the front page it is called : कातीयप्रातिशाख्य.

S[2]. It represents MS. No. 2137 of the Sarasvati Bhavana Library. It contains folios :—1–23. Size : 8. 6″×3. 9.″ Lines per page : 7. Letters per line : about 29. Script : Devanāgari. Date : Saṁvat 1823. It is complete.

It begins ( fol. 1b ) :—श्रीगणेशाय नमः। जपादौ नाधिकारोस्ति सम्यक्पाठमजानतः। प्रातिशाख्यमतो ज्ञेयं सम्यक्पाठस्य सिद्धये ॥ स्वरसंस्कारयोश्छंदसि नियमः।

It ends ( fol. 23a ) :—इति श्रीकात्यायनप्रातिशाख्यसूत्रे अष्टमोध्यायः समाप्तः। संवत् १८२३ वर्षे चैत्रकृष्ण १० रवौ दिने या(ज्ञिक)देवकृष्णसूनुना करुणाकृष्णेन लिखितं शुभं ॥ श्रीः ॥

The Colophons are generally like : इति कात्यायन-प्रातिशाख्यसूत्रे प्रथमोध्यायः।

On the front-page is written :—याज्ञिकदेवकृष्णस्येदं प्रातिशाख्य ॥ सूत्रं पुस्तके पत्राणि त्रयोविंशतिः। पुस्तकमेतत् रामचन्द्रपाठकीयम्।

On the back-page is written : याज्ञिकदेवकृष्णस्येदं प० २३

S[3]. It represents MS. No. 2149 of the Sarasvati Bhavana Library. It contains folios : 1–17. Size : 9. 1″×4. 2.″ Lines per page : 9. Letters per line : about 32 ( ranging from 26 to 35 ). Handwriting : good. Script : Devanāgarī. Date : not given, but may be about 150 years old. Generally gives a correct text of the Prātiśākhya.

It begins :—श्रीगणेशाय नमः। श्री सरस्वत्यै नमः। श्रीगुरुभ्यो नमः। ॐ नमः सिद्धम् ॥ जपादौ नाधिकारोस्ति सम्यक्पाठमजानतः ॥ प्रातिशाख्यमतोज्ञेयं सम्यक्पाठस्य सिद्धये ॥ १ ॥ स्वरसंस्कारयोश्छंदसि नियमः etc.

It ends :—इति कात्यायनकृते प्रातिशाख्यसूत्रे अष्टमोध्यायः ॥ ९ ॥ श्रीभीमचंड्यै नमो भूयादजस्रम् ॥

The colophons of the MS. are generally like :—इति प्रातिशाख्यसूत्रे प्रथमोध्यायः ।.

B[1]. It represents MS. No. 47242 of the Sarasvati Bhavana Library. It contains folios : 1–126. Size : 9.6″ × 3.3.″ Lines per page : 7. Letters per line : about 31. Handwriting : fair Devanāgarī script. Date : not given, but by appearance about 200 years old.

It begins :—ओं श्रीमन्महागणपतये नमः । अथ प्रातिशाख्ये भाष्यं लिख्यते जपादौ etc.

It ends on Fol. 126b :—इत्यानन्दपुरवास्तव्यभट्टवज्रट्टसूनुना । उवटेन कृतं भाष्यं प्रातिशाख्यस्य निर्मलं ॥ इति श्रीमातृमोदाख्ये प्रातिशाख्यभाष्ये अष्टमोध्यायः समाप्त । श्रीरामो जयति । शुभं भवतु । हे पुस्तक नारायणभट्ट अंढेकराचे असे ।

B[2]. It represents MS. No. 47247 of the Sarasvati Bhavana Library. It contains folios : 1, 3–106, 108–109. Size : 9.8″ × 3.7.″ Lines per page : about 10. Letters per line : about 30. Handwriting : indifferent old Devanāgarī script.

It begins :—ओं नमः । श्रीः विघ्नहर्त्रे यजुर्वेदाय सवित्रे नमः । ओं प्रणम्य परमात्मानं व्याख्यास्ये प्रातिशाख्यकम् । सरस्वतीं च जगतस्तमोनाशनदीपिकां ॥ जपादौ नाधिकारोस्ति सम्यक्पाठमजानतः । प्रातिशाख्यमतो ज्ञेयं सम्यक्पाठस्य सिद्धये ॥ स्वरसंस्कारयोश्छंदसि etc.

It ends (on fol. 109b) :—इत्यानंदपुरवास्तव्यवज्रटसूनुऊअटकृते प्रातिशाख्यभाष्येष्टमोध्यायः ॥ ८ ॥ आनन्दपुरवास्तव्यवजटाख्यस्य सूनुना । ऊअटेन कृतं भाष्यं प्रातिशाख्यस्य निर्मलं ॥ १ ॥ इति श्रीप्रातिशाख्यभाष्यं संपूर्णं ॥ समाप्तं ॥ वाल्मीकिज्ञातीयेन शिवाख्येन लिखितमिदं भट्टमहीदासपठनार्थं । शुभं । श्रीनृसिंहो जयतात् । स्वस्ति संवत चन्द्रामरसभूमिहायने आश्विनाद्यदलविष्णुवासरे विश्वनाथपुरि भूमिकिंकरः । प्रातिशाख्यविवृतिं व्यलीलिखत् ।

It shows that the date of the MS. is संवत् 1631.

In addition to the above evidence, I have also taken into account the Text edited by Professor A. Weber, with German translation, in 1857, in the Indische Studien, Vol. IV, the Banaras edition of 1883–88 by Pandita Jugala Kiśora Śarmā and the Calcutta edition of 1893 by Pandita Jīvānanda Vidyāsāgara. They are respectively named in the foot-notes as W, B

and K. The last two, though in no sense critical editions, also contain Uvaṭa's Commentary on the Prātiśākhya. The Banaras edition here and there in the foot-notes refers to four MSS. called respectively क, ख, ग and घ, but does nos care to give any details regarding the same. The Calcutta edition is really a copy of the Banaras edition and practically does not carry any independent value.

As regards the English translation, every care has been taken to give a clear and accurate version of the Sūtras. Being the first English translation of the text, it need not be stated, it has got its own importance.

Shrimati Indu Rastogi,
C/o Shri R. C. Rastogi,
M. A., Sahityacharya, P. C. S.,
District Planning Officer,
Pilibhit. U. P.
1-6-1967.

**Shrimati Indu Rastogi.**

# CORRECTIONS

## शुक्लयजुःप्रातिशाख्यम्

( Sanskrit Text )

| Page | Line | Incorrect | Correct |
|---|---|---|---|
| ५ | १७ | एव- | एक- |
| ९ | १५ | पक्तो- | पक्ती- |
| १५ | १८ | B¹ B¹ | B¹ B² |
| १८ | १४ | विश्वपती- | विश्पती- |
| २० | २५ | B K | B |
| ३० | ४ | पृङ्ङ्क्त | पृङ्ङ्क्तं |

# अथ शुक्लयजुःप्रातिशाख्यम्



## प्रथमोऽध्यायः

स्वरसंस्कारयोश्छन्दसि नियमः[1] ॥ १ ॥ लौकिकानामर्थपूर्वकत्वात् ॥ २ ॥ न समत्वात् ॥ ३ ॥ स्याद्वाम्नायधर्मित्वाच्छन्दसि नियमः[2] ॥ ४ ॥ यत्तन्न ॥ ५ ॥ वायुः खात् ॥ ६ ॥ शब्दस्तत् ॥ ७ ॥ सङ्करोप[3] ॥ ८ ॥ स सङ्घातादीन् वाक् ॥ ९ ॥ त्रीणि स्थानानि ॥ १० ॥ द्वे करणे ॥ ११ ॥ शरीरात् ॥ १२ ॥ शरीरम् ॥ १३ ॥ शरीरे ॥ १४ ॥ तेषां समूहात् स उदयँस्त्रैकाल्यम् ॥ १५ ॥ ओंकारः स्वाध्यायादौ[4] ॥ १६ ॥ ओंकाराथकारौ ॥ १७ ॥ ओंकारं वेदेषु ॥ १८ ॥ अथकारं भाष्येषु ॥ १९ ॥ प्रयतः ॥ २० ॥ १ ॥

शुचौ ॥ २१ ॥ इष्टम् ॥ २२ ॥ ऋतुं प्राप्य ॥ २३ ॥ योजनान्न परम् ॥ २४ ॥ भोजनं मधुरं स्निग्धम् ॥ २५ ॥

---

१. This Sūtra is preceded by the stanza : जपादौ नाधिकारोऽस्ति सम्यक्पाठमजानतः । प्रातिशाख्यमतो ज्ञेयं सम्यक्पाठस्य सिद्धये ॥ in $S^1$ $S^2$ $S^3$ W K B $B^1$ $B^2$.

२. स्यादा–W.

३. सङ्करोपहितः B ( ग, घ ).

४. Instead of this Sūtra W and $S^3$ respectively read ओम् and ॐ.

वर्णदोषविवेकार्थम् ॥ २६ ॥ तिङ्कृत्तद्धितचतुष्टयसमासाः शब्द-मयम् ॥ २७ ॥ तां वाचमोंकारं पृच्छामः ॥ २८ ॥ अथ शिक्षा विहिताः ॥ २९ ॥ सवनक्रमेणोरःकण्ठभ्रूमध्यानि ॥ ३० ॥ आयाममार्दवाभिघाताः ॥ ३१ ॥ उच्चनीचविशेषः ॥ ३२ ॥ अथाख्याः समाम्नायाधिकाः प्राग्रिफितात् ॥ ३३ ॥ उपदिष्टा वर्णाः ॥ ३४ ॥ अन्त्याद्वर्णात् पूर्व उपधा ॥ ३५ ॥ निर्देश इतिना ॥ ३६ ॥ कारेण च ॥ ३७ ॥ अव्यवहितेन व्यञ्जनस्य ॥ ३८ ॥ र एफेन च ॥ ३९ ॥ स्वरैरपि ॥ ४० ॥[1] २ ॥

नानुस्वारयमविसर्जनीयजिह्वामूलीयोपध्मानीयाः ॥ ४१॥ दन्त्यस्य मूर्द्धन्यापत्तिर्नतिः ॥ ४२ ॥ समानस्थानकरणास्य-प्रयत्नः सवर्णः ॥ ४३ ॥ सिमादितोऽष्टौ स्वराणाम् ॥ ४४ ॥ सन्ध्यक्षरं परम् ॥ ४५ ॥ अकण्ठ्यो भावी ॥ ४६ ॥ व्यञ्जनं कादि ॥ ४७ ॥ अनन्तरं संयोगः ॥ ४८ ॥ स्पर्शेष्वेव संख्या ॥ ४९ ॥ द्वौ द्वौ प्रथमौ जित् ॥ ५० ॥ ऊष्माणश्च [2]हवर्जम् ॥ ५१ ॥ मुच्च ॥ ५२ ॥ धि शेषः ॥ ५३ ॥ द्वितीयचतुर्थाः सोष्माणः ॥ ५४ ॥ अमात्रस्वरो ह्रस्वः ॥ ५५ ॥ मात्रा च ॥ ५६ ॥ द्विस्तावान् दीर्घः ॥ ५७ ॥ प्लुतस्त्रिः ॥ ५८ ॥ व्यञ्जनमर्धमात्रा ॥ ५९ ॥ तदर्धमणु ॥ ६० ॥ ३ ॥

परमाण्वर्धाणुमात्रा ॥ ६१ ॥ स्थाने ॥ ६२ ॥ हस्तग्रहणे दीर्घप्लुतौ प्रतीयात् ॥ ६३ ॥ प्रथमग्रहणे वर्गम् ॥ ६४ ॥

---

१. S¹ K B B¹ B² ; the Sūtra स्वरैरपि precedes र एफेन च in S² S³ W.

२. ह– K B B¹ ; हि– corrected to ह– in S³ ; हि– B² S¹ S² W.

ऋ ⌓ कौ[1] जिह्वामूले ॥ ६५ ॥ इचशेयास्तालौ[2] ॥ ६६ ॥ षटौ मूर्धनि ॥ ६७ ॥ रो दन्तमूले ॥ ६८ ॥ लृलसिता दन्ते ॥ ६९ ॥ उवो⌓पपा[3] ओष्ठे ॥ ७० ॥ अहविसर्जनीयाः कण्ठे ॥ ७१ ॥ सवर्णवच्च ॥ ७२ ॥ ऐकारौकारयोः कण्ठ्या पूर्वा मात्रा ताल्वोष्ठयोरुत्तरा ॥ ७३ ॥ यमानुस्वारनासिक्यानां नासिके ॥ ७४ ॥ मुखनासिकाकरणोऽनुनासिकः ॥ ७५ ॥ दन्त्या जिह्वाग्रकरणाः ॥ ७६ ॥ रश्च ॥ ७७ ॥ मूर्द्धन्याः प्रतिवेष्टचाग्रम् ॥ ७८ ॥ तालुस्थाना मध्येन ॥ ७९ ॥ समानस्थानकरणा नासिक्यौष्ठ्याः ॥ ८० ॥ ४ ॥

वो दन्ताग्रैः ॥ ८१ ॥ नासिकामूलेन यमाः ॥ ८२ ॥ जिह्वामूलीयानुस्वारा हनुमूलेन ॥ ८३ ॥ कण्ठ्या मध्येन ॥ ८४ ॥ प्रथमोत्तमाः पदान्तीया अचञौ[4] ॥ ८५ ॥ विसर्जनीयः ॥ ८६ ॥ स्वराश्च लकारवर्जम् ॥ ८७ ॥ णकारर्कारावव्रग्रहे ॥ ८८ ॥ अनुनासिकाश्चोत्तमाः ॥ ८९ ॥ स्पर्शान्तस्य स्थान-करणविमोक्षः ॥ ९० ॥ अवसाने च ॥ ९१ ॥ प्रगृह्यम् ॥ ९२ ॥ एकारेकारोकारा द्विवचनान्ताः ॥ ९३ ॥ ओकारश्च पदान्तेऽ-नवग्रहः ॥ ९४ ॥ उकारोऽपृक्तः ॥ ९५ ॥ चमू अस्मे त्वे ॥ ९६ ॥ मे उदात्तम् ॥ ९७ ॥ अमी पदम् ॥ ९८ ॥ स्वरोऽ-क्षरम् ॥ ९९ ॥ सहाद्यैर्व्यञ्जनैः ॥ १०० ॥ ५ ॥

---

१. ⌓ क्कौ K B S³ ; प्कूकौ B¹ B² W ; प्कौ S¹ S².

२. –चु– S³.

३. उवोप्पूपा B¹ B² W ; उवोप्पा S¹ ; उवोपोपध्मा K B S³ ; उवौ-पोपध्मा S².

४. अचञौ S¹ S² S³ W B¹ B² ; अच् ञौ K.B.

उत्तरैश्चावसितैः ॥ १०१ ॥ संयोगादिः पूर्वस्य ॥ १०२ ॥ यमश्च ॥ १०३ ॥ क्रमजं च ॥ १०४ ॥ तस्माच्चोत्तरं स्पर्शे ॥ १०५ ॥ अवसितं च ॥ १०६ ॥ व्यञ्जनं स्वरेण सस्वरम् ॥ १०७ ॥ उच्चैरुदात्तः ॥ १०८ ॥ नीचैरनुदात्तः ॥ १०९ ॥ उभयवान् स्वरितः ॥ ११० ॥ एकपदे नीच[1]पूर्वः सयवो जात्यः ॥ १११ ॥ उदात्तादयः परे सप्त ॥ ११२ ॥ त्रयो नीच[2]स्वरपराः ॥ ११३ ॥ एदोद्भ्यामकारो लुग[3]भिनिहितः ॥ ११४ ॥ युवर्णौ यवौ क्षैप्रः ॥ ११५ ॥ इवर्ण उभयतोह्रस्वः प्रश्लिष्टः ॥ ११६ ॥ स्वरो व्यञ्जनयुतस्तैरोव्यञ्जनः ॥ ११७ ॥ उदवग्रहस्तैरोविरामः ॥ ११८ ॥ विवृत्तिलक्षणः पादवृत्तः ॥ ११९ ॥ उदा[4]द्यन्तो न्यवग्रहस्ताथाभाव्यः ॥ १२० ॥ ६ ॥

हस्तेन ते ॥ १२१ ॥ चत्वारस्तिर्यक् स्वरिताः ॥ १२२ ॥ अनुदात्तं चेत्पूर्वं तिर्यङ् निहत्य काण्वस्य ॥ १२३ ॥ ऋजुं निहत्य प्रणिहन्यन्तं[5] उदात्ते ॥ १२४ ॥ तीक्ष्णोऽभिनिहितः परम्परं मृदुस्त्वन्यः ॥ १२५ ॥ तस्यादित उदात्तं स्वरार्धमात्रम् ॥१२६॥ सप्त[6] ॥ १२७॥ त्रीन् ॥ १२८ ॥ द्वौ ॥ १२९ ॥ एकम्

---

१. नीच– $S^3$ W K B $B^1$ ; नि–$S^1$ $S^2$ ; $B^2$ corrects नीच– to नि– in a later hand.

२. नीच– $S^3$ W K B $B^1$ ; नि–$S^1$ $S^2$ ; $B^2$ writes नीच– , but also corrects it to नि– on the margin in a later hand.

३. लुग् $S^2$ $S^3$ K B ; $S^1$ corrects लुव् to लुग् ; लुव् W $B^1$ ( $B^1$ reads लुव् ) $B^2$.

४. उदात्ता– B ( घ ) ; उदात्ता– corrected to उदा– in $S^3$.

५. –हन्यन्त $S^1$ $S^2$ $S^3$ W $B^2$ ; हन्यत K B $B^1$.

६. सप्त $S^1$ $S^2$ $S^3$ K B $B^1$ ; सप्त सामसु W ; $B^2$ corrects सप्त सामसु to सप्त.

॥ १३० ॥ सामजपन्यूङ्खवर्जम् ॥ १३१ ॥ प्रावचनो वा यजुषि ॥ १३२ ॥ तमिति विकारः ॥ १३३ ॥ तस्मिन्निति निर्दिष्टे पूर्वस्य ॥ १३४ ॥ तस्मादित्युत्तरस्यादेः ॥ १३५ ॥ षष्ठी स्थानेयोगा ॥ १३६ ॥ तेनेत्यागमः ॥ १३७ ॥ अन्तरेण पर्वणी ॥ १३८ ॥ पर एकस्मात् ॥ १३९ ॥ उभयोर्विकारः ॥ १४० ॥ ७ ॥

वर्णस्यादर्शनं लोपः ॥१४१॥ विकारी यथासन्नम् ॥ १४२ ॥ संख्यातानामनुदेशो[1] यथासंख्यम् ॥ १४३ ॥ सन्निकृष्टविप्रकृष्टयोः सन्निकृष्टस्य ॥ १४४ ॥ पूर्वोत्तरयोरुत्तरस्य ॥ १४५ ॥ द्विरुक्तमाम्रेडितं पदम् ॥ १४६ ॥ संहितं स्थितोपस्थितम् ॥ १४७ ॥ संहितावदवग्रहः स्वरविधौ परं च सर्वं चेदनुदात्तम् ॥ १४८ ॥ इतिपरस्तिर्यङ्नीचोऽन्तोदात्ते मध्योदात्ते पर्वणि काण्वस्य वा ॥ १४९ ॥ उदात्तमयोऽन्यत्र नीच एव ॥ १५० ॥ एकवर्णः[2] पदमपृक्तम् ॥ १५१ ॥ स एवादिरन्तश्च ॥ १५२ ॥ अवग्रहः पदान्तवत् ॥ १५३ ॥ न त्वितिकरणम्[3] ॥ १५४ ॥ पूर्वेणोत्तरः संहितः[4] ॥ १५५ ॥ पदविच्छेदोऽसंहितः ॥ १५६ ॥ एवपदद्विपदत्रिपदचतुष्पदानेकपदाः पादाः ॥ १५७ ॥ वर्णानामेकप्राणयोगः संहिता ॥ १५८ ॥ विप्रतिषेध उत्तरं वलवदलोपे ॥ १५९ ॥ विसर्जनीयो रिफितः ॥ १६० ॥ ८ ॥

---

१. अनूदेशो K B.

२. एकवर्णः K B ; एकवर्णं W S¹ S² S³.

३. –करणः S¹.

४. –हिता S³.

करनुदात्तम्[1] ॥ १६१ ॥ अन्तरनाद्युदात्तम् ॥ १६२ ॥ अहरभकारपरम् ॥ १६३ ॥ आव्वर्वरिति समानर्चि ॥ १६४ ॥ स्तोतर्वस्तः सनुतरभार्वार्द्वाः[2] ॥ १६५ ॥ स्वः पदमनरणे ॥ १६६ ॥ पदादिश्चाजित्परः ॥ १६७ ॥ ह्वाः सवितः पुनस्त्वष्ट-र्नेष्टरकर्होतर्मातः प्रातर्जामातरजीगः प्रणेतरिति च[3] ॥ १६८ ॥ वृद्धं वृद्धिः ॥ १६९ ॥ ९ ॥

॥ इति कात्यायनप्रातिशाख्यसूत्रे प्रथमोऽध्यायः ॥



---

१. करनु- W S[1] S[2] S[3] ; करमनु- K B.
२. ह्वा ( for ह्वाः ) K.
३. च omitted in B[1].

# द्वितीयोऽध्यायः

स्वरितवर्जमेकोदात्तं पदम् ॥ १ ॥ अनुदात्तम् ॥ २ ॥ नो नौ मे मदर्थे त्रिद्व्येकेषु ॥ ३ ॥ मा च ॥ ४ ॥ वो वान्ते त्वदर्थे ॥ ५ ॥ त्वा च ॥ ६ ॥ पूर्ववानानुदेशः ॥ ७ ॥ असि ॥ ८ ॥ यथा गृभोसुवोऽग्निभ्यः ॥ ९ ॥ गिर्वणः ॥ १० ॥ अग्ने घृतेनेति च ॥ ११ ॥ प्रचिकितश्च ॥ १२ ॥ एनोऽपापे ॥ १३ ॥ इहपूर्वं श्रुतम् ॥ १४ ॥ मन्ये पदपूर्वं सर्वत्र ॥ १५ ॥ वा च कमु चित्समस्माद् घ ह स्म त्व ईम्मर्या अरे स्विन्निपाताश्चेत् ॥ १६ ॥ पदपूर्वमामन्त्रितमनानार्थेऽपादादौ ॥ १७ ॥ तेनानन्तरा षष्ठ्येकपदवत् ॥ १८ ॥ न पृथिवि देवयजन्योषध्या देव भूरेः पवित्रपते पवित्रपूतस्यापान्नपान्नृणां[1] नृपते सोमाग्नेः सोमेन्द्रस्य[2] सोम सुवीर्यस्य सोम विश्वेषां देवानां प्रजापते यस्य यस्य देवाग्ने तवाग्ने वाजस्याग्ने वरुणस्यापो अस्माकम् ॥ १९ ॥ सुमङ्गल सत्यराजन्विकिरिद्र विलोहित दरिद्र नीललोहित श्रेयस्कर भूयस्कराम्बे अम्बिकेऽम्बालिके शरव्ये ब्रह्मसंशिते मरुतो अश्विना यव्ये गव्ये द्यावापृथिवी उरो अग्ना३इ[3] पत्नीवँल्लोजी३न्छाची३न्मीढुष्टम शिवतम सहस्राक्ष शतेषुधे वसुपते वसुदावन् ॥ २० ॥ १ ॥

---

१. नृपान् ( for नृणां ) K.

२. सोमेन्द्रस्य omitted in S[1].

३. अग्नाई S[1].

४. पत्नीवल्ला– S[1].

इडोत्तराणि नव स्वानोत्तराणि षडग्न्युत्तराणि चत्वारि भगोत्तराणि चेन्द्रोत्तरमेकं सिनीवाल्युत्तरं च प्रजापतये ब्रह्मन्निति च ॥ २१ ॥ भूतिराद्युदात्तम् ॥ २२ ॥ कदा न-रिष्येम-पूर्वम् ॥ २३ ॥ आमन्त्रितं च ॥ २४ ॥ कृष्णो मृगसंयोगे ॥ २५ ॥ व्ययवाँश्चान्तः ॥ २६ ॥ परः प्रधाने ॥ २७ ॥ मात्रा च परिमाणे ॥ २८ ॥ दक्षिणा च ॥ २९ ॥ न दश-विश्वकर्मा-निषद्येन्द्रस्य-पातु-सदः-सद्भ्येषु[1] ॥ ३० ॥ कर्णः[2] स्वाङ्गे[3] ॥ ३१ ॥ महो नपुंसके ॥ ३२ ॥ अवश्च ॥ ३३ ॥ अन्धो वीर्ये ॥ ३४ ॥ एता वर्णे ॥ ३५ ॥ रोहितश्च केवलः ॥ ३६ ॥ यन्त्री राट् ॥ ३७ ॥ ओषधीरनामन्त्रिते ॥ ३८ ॥ सर्व विश्व[4] मानुषाशाः स्वाहा वाजः पयो नमः ॥ ३९ ॥ असि शिवा सुपदा पयस्वती यत्ते मधुमतीर्व र्चस्वानोजिष्ठो भ्राजिष्ठः[5] शुष्मिणी भद्रवाच्याय वन्द्यो[6] मेध्यो[7] यम आदित्यश्वितः[8] सोमेन स्वसेत्येतेषु ॥ ४० ॥ २ ॥

धनदारत्नधाम्यां च ॥ ४१ ॥ रायोऽपोषे ॥ ४२ ॥ न भागमीशिषयोः ॥ ४३ ॥ त्रिधा वद्धहितयोः ॥ ४४ ॥ सुकृतं

---

१. सदसद्भ्योषु B¹.

२. कर्ण W.

३. स्वांगः B¹.

४. सर्वे विश्वं B¹.

५. ओजिष्ठ भ्राजिष्ठ B¹ ; B² corrects ओजिष्ठ भ्राजिष्ठ to ओजिष्ठो भ्राजिष्ठः.

६. वन्द्यो S¹ S² S³ W B ; वन्द्या K ; वन्द्य B¹ ; वन्द्य corrected to वन्द्यो in B².

७. मेध्य B¹ ; मेध्य corrected to मेध्यो in B².

८. यम आ– S² S³ W ; यमु आ– S¹ ; यमा– K B B¹ ; यमा– corrected to यम आ– in B².

९. –त्यत्रितः B¹ ; –त्यत्रितः corrected to –त्यश्वितः in B².

भूते०॥ ४५ ॥ द्विरुदात्तानि ॥ ४६ ॥ बृहस्पतिर्वनस्पतिर्नराशंसस्तनूनप्त्रे तनूनपान्नक्तोषासोषासानक्ता द्यावापृथिवी द्यावाक्षामा क्रतूदक्षाभ्यामेतवा अन्वेतवा इति च ॥ ४७ ॥ देवताद्वन्द्वानि चानामन्त्रितानि[1] ॥ ४८ ॥

इन्द्राबृहस्पतिभ्यामिन्द्राबृहस्पती इति त्रीणि ॥ ४९ ॥ सर्वमप्ना३इ लाजी३ञ्छाची३निति त्रिमात्राणि च ॥ ५० ॥ प्रणवश्च ॥ ५१ ॥ विवेशा३ इति चानुदात्तम् ॥ ५२ ॥ आसी३दिति चोत्तरं विचारे ॥ ५३ ॥ पूर्वमन्तोदात्तम् ॥ ५४ ॥ द्वन्द्वं चेन्द्रसोमपूर्वं पूषाग्निवायुषु ॥ ५५ ॥ अग्निश्चेन्द्रे ॥ ५६ ॥ ऋक्साम्नि च ॥ ५७ ॥ यतो गतौ ॥ ५८ ॥ पायोर्विंशः ॥ ५९ ॥ आयुरर्यमोर्वश्यस्तिभ्यः ॥ ६० ॥ ३ ॥

अस्य रोचनासौ-बोधा मे-पारं-पुर एतारो-दिवः-कोऽहं-त्वंमहीं-य ईश-ईशानेभ्यः ॥ ६१ ॥ प्रतां-यज्ञस्य-हविषः-पाहीत्पातंमध्वो-यजमानस्य-होतुरजरासो-लोकेषु च[2] ॥ ६२ ॥ अनुदात्तमन्यत्[3] ॥ ६३ ॥ पक्षोर्हसयोरन्त उदात्त[4] आदिर्वा ॥ ६४ ॥ वृद्धं वृद्धिः ॥ ६५ ॥ ४ ॥

॥ इति कात्यायन-प्रातिशाख्यसूत्रे द्वितीयोऽध्यायः ॥



१. –न्यनामंत्रितानि च ( for –नि चानामन्त्रितानि ) S¹.
२. B¹ B² K B ; च omitted in S¹ S² S³ W.
३. च omitted in W.
४. उदात्त S¹ S² S³ W B¹ B² ; उदात्तं K B.

# तृतीयोऽध्यायः

संहितायाम् ॥ १ ॥ अर्थः पदम् ॥ २ ॥ पदान्तपदाद्योः सन्धिः ॥ ३ ॥ न परकालः पूर्वकाले पुनः ॥ ४ ॥ ह्यन्तराः कालाः ॥ ५ ॥ विसर्जनीयः ॥ ६ ॥ चछयोः शम् ॥ ७ ॥ तथयोः सम् ॥ ८ ॥ प्रत्ययसवर्णं मुदि शाकटायनः ॥ ९ ॥ अविकारं शाकल्यः शषसेषु ॥ १० ॥ प्रकृत्या कखयोः पफयोश्च ॥ ११ ॥ जिह्वामूलीयोपध्मानीयौ शाकटायनः ॥ १२ ॥ लुङ्[1] मुदि जित्परे ॥ १३ ॥ उपवसने पीवः ॥ १४ ॥ स ओषधीमयोः ॥ १५ ॥ व्यञ्जने च ॥ १६ ॥ स्य एष च ॥ १७ ॥ निशब्दो बहुलम् ॥ १८ ॥ अनितावध्याये ॥ १९ ॥ इति-वच्चर्चायाम् ॥ २० ॥ १ ॥

ककारपकारयोः सकारम् ॥ २१ ॥ भाव्युपधः षकारम् ॥ २२ ॥ आविर्निरिड[2] इडाया वसतिर्वरिवः ॥ २३ ॥ दिवोऽ[3]-ककुत्पृथिव्योः ॥ २४ ॥ रायः सहसः पोषपुत्रयोः ॥ २५ ॥ तमसोऽपरस्तात् ॥ २६ ॥ तपसस्पृथिव्याम् ॥ २७ ॥ अध्वनो रजसो रिषः स्पृशस्पातौ ॥ २८ ॥ अध्वनस्कुर्विति च ॥ २९ ॥ समानपदे च ॥ ३० ॥ परावत्रसाने ॥ ३१ ॥ कविः[4] करत्कृधिषु ॥ ३२ ॥ कृपीश्च कृधौ सकारम् ॥ ३३ ॥ सदो द्यौर्नमस्कृतं-

---

१. लुङ् K B S[1] S[2] S[3] W ; लुप् B[1] ; लुम् B[2].

२. अवि– K B.

३. दिवोः S[1].

४. कविष् K B S[2] B[2].

पितपिथेषु ॥ ३४ ॥ पति तालव्यस्वरोदये ॥ ३५ ॥ पदे च ॥ ३६ ॥ न परुषः परुषि ॥ ३७ ॥ वाजपतिर्वास एदिधिपुरन्तः- पर्शव्येनान्तःपार्श्वयमिति च ॥ ३८ ॥ अहर्पतौ[1] रेफम् ॥ ३९ ॥ परश्च मूर्धन्यम् ॥ ४० ॥ २ ॥

स्वर्धूः सांसहयोः ॥ ४१ ॥ उकारं दुर्दे ॥ ४२ ॥ नाशे च ॥ ४३ ॥ पुरो दाशे ॥ ४४ ॥ अनसो वाहौ सकारो डकारम् ॥ ४५ ॥ ओ[2]कारमितः सिश्वतौ सोपधः ॥ ४६ ॥ षड् दशदन्तयोः संख्यावयोऽर्थयोश्च[3] ॥ ४७ ॥ त आघादनाडम्बरात् ॥ ४८ ॥ वनसदो[4]ऽवेटो रेफेण ॥ ४९ ॥ पत्यौ[5] च सकारेण ॥ ५० ॥ ऋतावरौ च पतिपरयोः ॥ ५१ ॥ तद्बृहतौ करपत्योस्तलोपश्च ॥ ५२ ॥ परि कृते षकारेण ॥ ५३ ॥ चन्द्रे सु शकारेण ॥ ५४ ॥ दुधुक्षन्धो दकारम् ॥ ५५ ॥ भाविभ्यः सः[6] षं समानपदे ॥ ५६ ॥ अनुस्वाराच्च तत्पूर्वात् ॥ ५७ ॥ करेफाभ्यां च ॥ ५८ ॥ नेः सीदतेः ॥ ५९ ॥ ससाद च[7] ॥ ६० ॥ ३ ॥

---

१. अहर्पतौ W B¹ B² ; अहः पतौ K B S¹ S² S³.

२. S¹ S² S³ W B¹ B² ; उ– K B.

३. –वयोऽर्थयोश्च W S² B² K B; –वयवयोर्थयोश्च S¹ ; –वयवार्थयोश्च S³ ; –वयोर्थयोश्च योश्च B¹.

४. वन सदे W ; वनसदो the rest.

५. S¹ S² S³ K B ; पतौ W B¹ B².

६. सु S¹ B².

७. S¹ S² S³ K B ; ससाद च omitted as a Sūtra in W B¹ ; supplied on the margin in B².

ओकारात्तु ॥ ६१ ॥ ओश्वा[1]पृक्तात् ॥ ६२ ॥ जभेश्च ॥ ६३ ॥ परेः[2] सिञ्चतेः[3] ॥ ६४ ॥ अभेश्च[4] ॥ ६५ ॥ अव्यवहितोऽपि[5] ॥ ६६ ॥ वेर्युदयः ॥ ६७ ॥ हेर्मिथोदयः ॥ ६८ ॥ द्यवेश्च ॥ ६९ ॥ नेः स्त्यास्तनोः[6] ॥ ७० ॥ ततक्षौ ॥ ७१ ॥ अनोः स्तुवन्त्याम्[7] ॥ ७२ ॥ दुःर्ष्वप्न्यम्[8] ॥ ७३ ॥ वन्दारुर्माकिः ॥ ७४ ॥ सहेः पृतनायाः ॥ ७५ ॥ सधिरंशुरदितिः ॥ ७६ ॥ वायुरग्निरग्रेरेकाक्षरे[9] ॥ ७७ ॥ सकारपरे च ॥ ७८ ॥ मातृभिरर्चिभिः पायुभिर्वरूत्रीः ॥ ७९ ॥ पात्तथौ मूर्धन्यम् ॥ ८० ॥ ४ ॥

प्रकृत्या नानापदस्थे तकारे ॥ ८१ ॥ अनुसन्तनोतु बृहस्पतिसुतस्य सुसमिद्धाय सुसंदृशमभिसस्त्वाभिसंविशन्तु सुसस्या अतिस्थूलं मुसले पत्नीसंयाजान् क्रतुस्थलाञ्जिसक्थो[10] दिविस्पृशा हृदिस्पृशं हिंसीर्ऋक्सामयोर्ऋक्सामाभ्यां तित्तिरिः सोसेन सीसाः सीसं पशुसनि गोसनिः[11] प्रतिसदङ् प्रतिसद्दक्षा-

---

१. W ; ऊश्वा– the rest.

२. परेश्च K B.

३. सिञ्चतेः omitted in W.

४. अभेः S², B ( ग, घ ).

५. अव्यवेतोऽपि W B².

६. स्त्यायस्तन्योः B¹ B² ; स्त्यास्तन्योः B ( ख ).

७. स्तुवत्यां B¹.

८. दु– K ; दुष्– B.

९. –चरेण B¹.

१०. –सक्थौ S¹.

११. –सनि K B B¹.

सश्वतुर्स्त्रिंशत् ॥ ८२ ॥ ऋकाररेफारुदयः[1] ॥ ८३ ॥ पृथिवि-दिव्युपरिचर्पणिशकुनियासिभ्यः ॥ ८४ ॥ ऋपरेभ्यो नकारो णकारं समानपदे ॥ ८५ ॥ स्वरयवहकपैश्च ॥ ८६ ॥ निषण्णाय रथवाहणमिन्द्र एणं परिणीयते समिन्द्र ण उरुष्या णो रक्षा णः षू णः षु णः[2] षु णासत्या स्वर्णास्थूरि णौ प्र ण आयूंषि ॥ ८७ ॥ परि ण इति शाकटायनः ॥ ८८ ॥ प्र नेतिनुदति[3]-हिनोमीनाम् ॥ ८९ ॥ प्रकृत्या पदान्तीयः[4] ॥ ९० ॥ नि वनि नसः प्रपीनम्[5] ॥ ९१ ॥ श्रीमना इत्येके ॥ ९२ ॥ इन्द्राग्नी चित्रभानो वार्त्रघ्नं दुःष्वप्न्यं भ्रुवयोनिः पुरोऽनुवाक्याभिः पुरोऽनु-वाक्याश्चर्मन्नम् ॥ ९३ ॥ तवर्गे च ॥ ९४ ॥ पादनन्तर ऋकारे ॥ ९५ ॥ शिलिसिवर्गमध्यमव्यवहितोऽपि[6] ॥ ९६ ॥ दीर्घम् ॥ ९७ ॥ अश्व रश्मि मति सुमति श्व सुत चारय घृणि सेदि-मेन्द्रिय धारय चित्र भङ्गुर वयुनाश्वस्य हृदय घुष्यर्ताभ्यवताध्यर्च शक्ति पुरु शचि[7] वकारे ॥ ९८ ॥ नाश्ववद्धिरण्यात्[8] ॥ ९९ ॥ अभि विख्येपंवीरंविश्ववत्सवृत्रवाजयन्तेषु ॥ १०० ॥ ५ ॥

---

१. –रुदयश्च K B.

२. पु णः पू णः $S^1$ $S^3$ ( for पू णः पु णः ).

३. –नुदति– W $B^1$ ; –तुदति–$S^1$ ; –नुदाति– $S^2$ $S^3$ K B ; –नुदति– corrected to –नुदाति– in $B^2$.

४. पदान्तः corrected to पदान्तीयः in $B^2$.

५. प्रपीनाम् W.

६. –व्यवेतो $B^1$.

७. शची $S^3$ $B^1$ ; शची corrected to शचि in $B^2$.

८. –रण्यवत्परम् $B^1$.

९. –वीर– omitted in W ( in the Sūtra only, not in the Comm. )

अश्वस्य वाजिन इति च ॥ १०१ ॥ त्रिश्व सहस्रुत्वपुपत्वसुषु ॥ १०२ ॥ नरहामित्रेषु च ॥ १०३ ॥ तिष्ठाद्युदात्तम् ॥ १०४ ॥ ग्र वर्ण[1]श्रृङ्गयासेषु[2] ॥ १०५ ॥ नि वारहारयोरनवग्रहे ॥ १०६ ॥ नात्र नयामि ॥ १०७ ॥ धारयाम योजात्र सचस्व नुद मो षु जयतोरुष्य रक्ष यज यच्छ मत्सथ पिप्तत गायता तु येन[3] नकारे ॥ १०८ ॥ भव च ॥ १०९ ॥ सचात्ररुष्यवाजस्य-पायुषु च ॥ ११० ॥ अपृक्तः सौ ॥ १११ ॥ रथि तकार-नकारयोः ॥ ११२ ॥ अथोदारिथ[4] शोच पनय सादयजु वृप शत्रु सलक्ष्म घाघा[5]रात्यृत भवत[6] यकारे ॥ ११३ ॥ व वृधवृजोः ॥ ११४ ॥ अद्य तंहकारचकारभवतवृणीमहेदेवेषु ॥ ११५ ॥ न होतरि ॥ ११६ ॥ श्रृणुतत्विपिप्रजिभवतपिबेतस्मतिष्ठरक्षा[7] मकारे ॥ ११७ ॥ विश्वदेव्यसोमौ वत्याम् ॥ ११८ ॥ उप महोभिर्नक्तेमीकारैकारौकारनकारेभ्यः ॥ ११९ ॥ पूरुषो[8]ऽ-वसाने ॥ १२० ॥ ६ ॥

पूष्णोजहीमस्ते[9]ष्वत्र ॥ १२१ ॥ नरस्सप्तऋषीन्नस्त-आहुर्नियुद्भिष्षु[10] यत्र ॥ १२२ ॥ अभिमातिपृतनासुसपत्नधूर्विश्व-

---

१. वन- B[1].

२. -योः corrected to -यासेषु in B[2].

३. येना B[2].

४. अथोदारिथ S[1] S[2] S[3] W K B ; अथभवतोदारिथ B[1] B[2].

५. सलक्ष्म घाघा- S[1] S[2] S[3] B[2] ; सलक्ष्मा घाघा- W B[1] K B.

६. -त्यृत भवत S[2] W K B ; -त्यृत भवता S[1] S[3] ; -त्यृता B[1] B[2].

७. रक्ष S[1] S[3].

८. पूरुषा-W.

९. -जहीमते- B[1] B[2].

१०. -द्भिष्षु K B ; -द्भिःषु S[2] S[3] ; -द्भिषु S[1] W B[1] B[2].

समत्सुपृतनाग्रातेभ्यः सहेः ॥ १२३ ॥ उक्थाच्च शसेः[3] ॥ १२४ ॥ एवाच्छ चक्रमाथ[2] ॥ १२५ ॥ विश्वासौत्रामण्याम् ॥ १२६ ॥ अधायत्स्मगावायुषु ॥ १२७ ॥ पूर्वो द्वन्द्वेष्ववायुषु[3] ॥ १२८ ॥ हरिश्चयेत्येके ॥ १२९ ॥ पिबा सोमं पिबा सुतस्य स्था मयोभुवो नू रणे शमीष्व मामहानो मामहन्तामशीतम रीरिषो रीरिपत यामयन्ति हि ष्मा ते वर्धया रयिं श्रुधी हवं चरा सोम सुयवसिनी श्रोता ग्रावाणो धर्षा मानुषः पाथा दिवो युक्ष्वा हि गमया तमः सिञ्चता सुतं परीवाप उक्थाशस्त्राण्यत्ता हवींष्याच्या जानु क्षामा रेरिहत् क्षामा भिन्दन्तो रुहेमा स्वस्तये जनयथा च धारया मयि तरा[4] मृधो वोधा मे विचृता[5] वन्धमवता हवेषु शृणुधी गिरो रक्षा तोकं[6] चर्षणीसहां चर्षणी-धृतो येना समत्सु वनेमा त ऋध्यामा ते शिक्षा सखिभ्यस्तत्रा रथं दीया रथेनेता जयत[7] वर्धया त्वं प्रवामा घृतस्याजगन्था परस्या ररिमा हि पुरीतता प्लीहाकर्णशुण्ठाकर्णौ ।[8] प्रकृतिदीर्घा-

---

१. उक्थाच्छसेः B[1].

२. –थाः W.

३. –वायुषु B[1] B[1] K B ; –वायौ S[1] S[2] S[3] W.

४. धारयाम पितरा K B.

५. विचृता S[1] S[2] S[3] K B ; चृता W B[1] ; चृता corrected to विचृता in B[2].

६. त्वं ( for तोकं ) W.

७. रथेनेता जयत S[2] W B[2] K B ; रथेनेता जयता S[1] ; रथेन प्रेता जयत B[1] S[3].

८. प्लीहाकर्णशुण्ठाकर्णौ S[1] S[2] S[3] K B; प्लीहाकर्णः शुण्ठाकर्णः W B[1] B[2] ( शुण्ठाकर्णो B[1], शुण्ठाकर्णौ B[2] ).

वित्येके[1] । नीकाशा अनूकाशेन[2] चक्रा जरसं[3] मिथू कस्तरता सखायः सासह्वानपामार्गोभयादत ऋतीपहमभी पुँ[4] सुष्टरीमा जुषाणा[5] यजा देवान् येना पावकाश्चायन्तो यदी सरमा स्वदया सुजिह्व निपद्या दधिष्व सदतना रणिष्टन भरा चिकित्वां-श्चिकित्सा[6] गविष्टावत्रादद्द्रक्षा[7] चायुनक्[8] सृजा रराणः सादन्य-मिति च ॥ १३० ॥ अनुनासिकमुपधा प्रागन्तस्थायाः ॥ १३१ ॥[9] स्वर औपशिविः[10] ॥ १३२ ॥ अनुस्वारेण व्यञ्जने ॥ १३३ ॥ नुः ॥ १३४ ॥ चछयोः शम् ॥ १३५ ॥ तथयोः सम् ॥ १३६ ॥ दधन्वान् स्ववान् यकारे लोपम् ॥ १३७ ॥ रयिवृधे च[11] ॥ १३८ ॥ नपुंसकादिकारस्य ॥ १३९ ॥ न सप्तम्यामन्त्रितयोः ॥ १४० ॥ ७ ॥

नॄन् पकारे विसर्जनीयम् ॥ १४१ ॥ शत्रून् परिधीन् क्रतून् वनस्पतीन् स्वरे रेफम् ॥ १४२ ॥ आकारोपधो यकारम् ॥ १४३ ॥ न तमे ॥ १४४ ॥ निर्जगन्वान् तमसि ॥ १४५ ॥

---

१. प्रकृतिदीर्घाविव्येके omitted in B[1], given on the margin in B[2].

२. नू ( for अनू- ) B[1].

३. यत्रा नो ( for चक्रा जरसं ) B[1] ; यत्रा नो corrected to चक्रा जरसं in B[2].

४. पुणः S[1].

५. जुषाणो B[1] ; जुषाणो corrected to जुषाणा in B[2].

६. चिकित्वांत्सादया S[3].

७. अवादद् रत्ता K; अवाददन्नो B[1].

८. चन आयुनक् S[1].

९. नुः added in S[1].

१०. -शिविः S[1] S[2] W B[1] B[2] ; -शविः S[3] K B.

११. -वृधेन B[1].

धामञ्छत्रूँश्चिकित्वान्[1] त्वं पूषन्नवन्निति च ॥ १४६ ॥ अश्वादौ चाध्याये ॥ १४७ ॥ मनुष्यांस्ताँल्लोकानमित्रानुदि ॥ १४८ ॥ आप्नोतीत्योश्च ॥ १४९ ॥ संक्रमे च वैष्णवान् ॥ १५० ॥ गृहानैमि गृहानुपह्वयामहे वर्चस्वानहं मनुष्यानन्तरिक्षमग्निष्वात्तानृतुमतः पयस्वानग्ने तानश्विना पतङ्गानसन्दितः स्वर्गानपां पतिः सपत्नानिन्द्रः[2] सपत्नानिन्द्राग्नी नभस्वानार्द्रदानुर्विद्वानग्नेर्देवानस्रेधतानड्वानाशुरथैतानष्टौ विरूपानालभत एतावानस्यायुष्मानग्ने वायव्यानारण्याः प्रविद्वानग्निनानड्वानघोरामौ शत्रून्नु यं यातुधानानस्थादस्मानरिष्टेभिरिति[3] ॥ १५१ ॥ वृद्धं वृद्धिः ॥ १५२ ॥ ८ ॥

॥ इति कात्यायनप्रातिशाख्यसूत्रे तृतीयोऽध्यायः ॥



१. –स्वान् W B[1] B[2] ; –त्वां S[1] ; –त्वाँस् B K S[2] S[3].
२. इन्द्रः W S[1] S[2] S[3] B[1] B[2] ; इन्द्र B K.
३. –भिरिति B K B[1] B[2] S[3] ; –भिः S[2] W ; –भि S[1].

# अथ चतुर्थोऽध्यायः

अनुस्वारं रोष्मसु मकारः ॥ १ ॥ नुश्चान्तःपदेऽरेफे[1] ॥ २ ॥ अनुनासिका चोपधा ॥ ३ ॥ लोपं काश्यपशाकटायनौ ॥ ४ ॥ प्रकृत्या सम्राट्साम्राजि ॥ ५ ॥ शं चे षकारादुकारोदयात् ॥६॥ समन्तःपदे कखपफेष्वनूष्मपरेषु ॥ ७ ॥ नुश्चाम्रेडिते ॥ ८ ॥ अन्तःस्थामन्तःस्थास्वनुनासिकां परसंस्थानाम्[2] ॥९॥ हि ॥१०॥ स्पर्शे परपञ्चमम् ॥ ११ ॥ तकारो ले लम् ॥ १२ ॥ नुश्चानुनासिकम् ॥ १३ ॥ ङ्नौ क्ताभ्यां सकारे ॥ १४ ॥ न दाल्भ्यस्य ॥ १५ ॥ रलावृलवर्णाभ्यामूष्मणि स्वरोदये सर्वत्र ॥ १६ ॥ प्रगृह्यं चर्चायामितिना पदेषु ॥ १७ ॥ रिफितं च संहितायामनिरुक्तम् ॥ १८ ॥ पदावृत्तौ चान्तरेण ॥ १९ ॥ क्रमोक्तावृत्तिः पदेषु ॥ २० ॥ १ ॥

सुपदावसानवर्जम् ॥ २१ ॥ अनितावन्तर्विकारागमं प्रागुक्त्वा ॥ २२ ॥ विश्वपतीवेति च ॥ २३ ॥ स्वरश्छकारे चकारेण सर्वत्र ॥ २४ ॥ यस्यातिहाय सहेति न ॥ २५ ॥ विश्वा ऊष्मान्तं परि द्विषस्त्वं त्वां यदजयो[3] विराजत्यनिरा अवीवृधन् परिष्ठाः सुक्षितय आशा ओषधीराभाह्यमीवा हि मायास्तेऽसीत्ये[4] तेषु ॥ २६ ॥ पृथिव्या स्वरान्तं सम्भव[5] शुक्रो मन्थी पृथिवीं परो

---

१. वंशः added to –रेफे in S¹ ; वंशः given as the third Sūtra in B K.

२. –सं– S¹ S³ B¹.

३. यदयो B K ; यदजयो the rest.

४. –ऽसील्ये–W S¹ S² S³ B¹ B² ; –सी– B K.

५. सम्भवः B K.

देवेभिरित्येतेषु ॥ २७ ॥ च[1] विश्वा वो ब्रह्म विश्वा हरी युक्तास्ते शफानां जजान नु कमित्येतेष्विमा[2] ॥ २८ ॥ हवेमोतेमा च ॥ २९ ॥ विष्णो ते बभूव नासत्या भिषजा न आवोढं या देवा हविषो नो मृडातो नो अच्छ[3] विप्रुश्चेत्येतेषु ता ॥ ३० ॥ ता ता च ॥ ३१ ॥ धिष्ण्या वरिवोविदं धिष्ण्या[4] युवमिति च ॥ ३२ ॥ भाव्युपधश्च रिद्विसर्जनीयः ॥ ३३ ॥ रेफे लुप्यते दीर्घं चोपधा ॥ ३४ ॥ रेफं स्वरधौ ॥ ३५ ॥ कण्ठ्यपूर्वो यकार-सरिफितः ॥ ३६ ॥ लोपं धौ[5] ॥३७॥ भूमेश्चाकारेऽपृक्ते ॥३८॥ यकाराकारयोर्जास्पत्ये पदे ॥ ३९ ॥ अलोपो मांस्पचन्याः ॥ ४० ॥ २ ॥

सर्वो अःकार[6] ओकारम् ॥ ४१ ॥ अकारे च ॥ ४२ ॥ एषो ह च[7] ॥ ४३ ॥ स्वो रुहावहश्च रात्र्याम् ॥ ४४ ॥ स्वरे भाव्यन्तःस्थाम् ॥ ४५ ॥ सन्ध्यक्षरमयवायावम् ॥ ४६ ॥ उदात्त-स्यान्तःस्थीभावे स्वरितं[8] परमनुदात्तम्[9] ॥ ४७ ॥ कण्ठ्य ऋकारे ह्रस्वम् ॥ ४८ ॥ अथैकमुत्तरश्च ॥ ४९ ॥ सिं सवर्णे दीर्घम् ॥ ५० ॥ अनुनासिकवत्यनुनासिकम् ॥ ५१ ॥ कण्ठ्यादिवर्ण

---

१. इमा च ( for च ) W.

२ इत्येतेषु W.

३. अछा S[1].

४. धिष्ण्य S[1].

५. लोपो धौ W B[1] ; लोपो धौ corrected to लोपं धौ B[2].

६. S[1] S[3] W B[2] ; सर्वोअकार B K B[1] ; सर्वोकार S[2].

७. च omitted in W B[2].

८. स्वरितं omitted in S[3].

९. अनुदात्तऽ स्वरितं S[3].

एकारम् ॥ ५२ ॥ उवर्ण ओकारम् ॥ ५३ ॥[1] समुद्रस्येमँस्त्वेमँ-स्त्वोअन्निति च ॥ ५४ ॥ एजत्योजोरेकेषाम् ॥ ५५ ॥ संध्यक्षर ऐकारौकारौ ॥ ५६ ॥ वाहौ च स्वरभूते ॥ ५७ ॥ आरमृकारोऽ-पृक्तात् ॥ ५८ ॥ ऌकारश्चाल्कारम् ॥ ५९ ॥ एदोद्भ्यां पूर्वसकारः ॥ ६० ॥ ३ ॥

तौ चेदुदात्तावनुदात्ते[2] स्वरितौ ॥ ६१ ॥ न देशेऽभवति ॥ ६२ ॥ गाहमानः शिवो भरन्तो द्वेषोभ्यो जम्भयन्तो वाजे वाजजितो मदन्तः शोचेऽवसे सुपुवे ज्योते सुपर्णो वीरुधः सुवीरो धातवे सूनवे द्रूणान आशवो वहतः संक्रन्दनो बाहवोऽयुध्योऽद्रुहः ॥ ६३ ॥ वोऽहं सोऽहं सोऽस्माकं तेऽभिगरो वोऽर्वाची ॥६४॥ येऽन्नात्रयोः ॥ ६५ ॥ अविद्यासम्भूत्योश्च ॥ ६६ ॥ उपस्थेऽन्त-स्तेभ्योऽकरम् ॥ ६७ ॥ नमोऽस्त्वसौत्रामण्याम् ॥ ६८ ॥ विश्वेऽग्रे विशो रायोऽनग्नौ ॥ ६९ ॥ सूर्योऽग्नेऽभौ ॥ ७० ॥ रिषो यवसे पुरुप्रियोऽन्नपतेऽर्णवे ॥ ७१ ॥ व्यपरे च ॥ ७२ ॥ गवे मे मनसो वाजयन्तः सोम्यासः पाशिनो विदानोऽनृते मूजवतो वृष्णे[3]ऽपाको दीदिवस्त्रयस्त्रिंशे ब्रह्मणे यको रथो विश्वतः पादो वसन्तः ॥ ७३ ॥ अवोस्त्वग्ने गृहपतेऽभि सत्वानोऽहं नोऽजस्रया विमानोऽजस्रः सुतेऽश्विना नमोऽग्नये तेऽग्रं[4] तेऽग्रे वृक्षस्य प्रथमोऽन्तस्तेऽन्येन ॥ ७४ ॥ पणयो जहीमोऽम्बिके ॥ ७५ ॥ नोनुमोऽदुग्धाइव प्रचेतसोऽश्वान्नरोऽस्माकं वृषपाण-

---

१. Sūtras 52 and 53 read as one Sūtra in W.

२. उदात्ताद– $S^3$.

३. वृष्णो B K $S^1$.

४. तेऽग्रं omitted in B K.

योऽश्वीः प्रदिशोऽनूदिते[1]ऽनागा अन्धसोऽर्चा पनस्यतेऽद्धा यज्ञियेभ्योऽमृतत्वं विपश्चितोऽभि[2] जनोऽनमीव आयवोऽनु[3] नोऽद्य देशेऽभवद् वयुनेऽजनिष्ट विद्मनापसोऽजायन्त पूर्व्यासोऽरेणवो नोऽस्मा नोऽदितिर्नोऽहिः ॥ ७६ ॥ ब्राह्मणः ॥ ७७ ॥ यजुष्षु च ॥ ७८ ॥ संक्रमे च सर्वत्र । ७९ ॥ प्रकृतिभाव ऋक्षु ॥ ८० ॥ ४ ॥

जुषाणश्चानध्वनि ॥ ८१ ॥ ते चानुदात्तमनुदात्ते ॥ ८२ ॥ हेड आपो गुहोऽपाग्ने धीरासो देवास उरो रक्षा णो मो वैश्वानरो वृषभो वचः प्राण उदानोऽङ्ग[4] इमा मे वृष्णो दशमास्योऽन्ध आवित्तोऽरिष्टो अर्जुनः प्रत्याश्रावः स्विष्टो घासे प्रणीतस्तेभ्यो नमो अस्तु दूरे नो अद्य यज्ञे सधस्थे सो अध्वरायेन्द्रे हिरण्यपर्णो द्वारो देवोऽब्दो रथिभ्यो महद्भ्यः संसदः ॥ ८३ ॥ छन्दो अङ्कुपमङ्काङ्कमस्त्रीत्रयः ॥ ८४ ॥ का भ्रुवोती सदना होतारा ज्या स्वधा पृथिवी प्रतिमेमसदन्नश्यामाकर्मोर्ध्वमियमवस्तादुतास्तिषु ॥ ८५ ॥ प्रगृह्यं स्वरे ॥ ८६ ॥ न रोदसीमे ॥ ८७ ॥ विरूपतीवो-पस्थिते ॥ ८८ ॥ उकारोऽपृक्तोऽस्पर्शात् ॥ ८९ ॥ प्लुतमितौ ॥ ९० ॥ ओकारश्च ॥ ९१ ॥ उकारोऽपृक्तो दीर्घमनुनासिकम् ॥ ९२ ॥ इतेश्च[5] परं पदं[6] चर्चायाम् ॥ ९३ ॥ तकारवर्गश्चकारवर्गे

---

१. –नु उदिते B¹ B².

२. –भिर् K.

३. आयुवोऽनु B K.

४. –नो अंग S¹ S²; –नोग्न B¹.

५. एतेश्च K; इत्येश्च B¹.

६. परं पदं B K S²; परं पद–S³; परपद–S¹; परमु पदं B¹ B²; परमु पद–W.

चकारवर्गम् ॥ ९४ ॥ शकारे च ॥ ९५ ॥ परश्चास्पर्शेपरश्छम् ॥ ९६ ॥ उदः स्तभाने लोपम् ॥ ९७ ॥ अश्वात् स्थे[1] तकारं संज्ञायाम् ॥ ९८ ॥ स्वरात् संयोगादिर्द्विरुच्यते सर्वत्र ॥ ९९ ॥ परं तु रेफहकाराभ्याम् ॥ १०० ॥ ५ ॥

ऊष्मान्तःस्थाभ्यश्च स्पर्शः ॥ १०१ ॥ जिह्वामूलीयोपध्मानीयाभ्यां च ॥ १०२ ॥ यैस्तु परं तैर्न पूर्वम् ॥ १०३ ॥ नास्वरपूर्वा ऊष्मान्तःस्थाः ॥ १०४ ॥ विसर्जनीयाद् व्यञ्जनपरः ॥ १०५ ॥[2] ङ्नौ चेद् ध्रस्वपूर्वौ स्वरे पदान्तौ ॥ १०६ ॥ संयोगपूर्वव्यञ्जनान्तावसानगताः स्वरा द्विमात्राः[3] ॥ १०७ ॥ प्रथमैर्द्वितीयास्तृतीयैश्चतुर्थाः ॥ १०८ ॥ नानुस्वारः ॥ १०९ ॥ सवर्णे ॥ ११० ॥ ऋवर्णे ॥ १११ ॥ लृवर्णे ॥ ११२ ॥ यमे ॥ ११३ ॥ विसर्जनीयः ॥ ११४ ॥ स्ववर्गीये चानुत्तमे ॥११५॥ अवसितं च ॥ ११६ ॥[4] नान्तःपदे स्वरपञ्चमान्तःस्थासु ॥ ११७ ॥ स्पर्शोऽपञ्चमः स्वरघौ तृतीयम् ॥ ११८ ॥ जिति प्रथमम् ॥११९॥ असस्थाने म्रुदि द्वितीयं शौनकस्य ॥१२०॥६॥

पञ्चमे पञ्चमम् ॥ १२१ ॥ हश्च तस्मात् पूर्वचतुर्थम् ॥ १२२ ॥ नकारपरो जातूकर्ण्यस्य ॥ १२३ ॥ हि ॥ १२४ ॥ यवयोः पदान्तयोः स्वरमध्ये लोपः ॥ १२५ ॥ न वकारस्यासस्थान एकेषाम् ॥ १२६ ॥ असौ च शाकटायनः ॥ १२७ ॥

---

१. अश्वात् स्थे B K W B[1] S[2]; अश्वस्थे S[1] S[3] B[2].

२. B K omit विसर्जनीयाद् व्यञ्जनपरः, Though its Comm. is given in both of them.

३. Instead of this Sūtra B[1]reads : संयोगवाक्यार्थत्रयं पूर्वव्यंजनं ता अवसानगताः स्वद्विमात्राः ।

४. न द्विरुक्तम् added as an additianal Sūtra in W.

प्रउगम्मिति[1] यकारलोपः ॥ १२८ ॥ अनादेशेऽविकारः ॥१२९॥ प्रागुवर्णादक्षराणामेकीभावः ॥ १३० ॥ स्वरितवान् स्वरितः ॥ १३१ ॥ उदात्तवाननुदात्तः ॥ १३२ ॥ इवर्णमुभयतोह्रस्वमुदात्तपूर्वमनुदात्तपरं स्वरितम् ॥ १३३ ॥ वीक्षितायेति च ॥ १३४ ॥ उदात्ताच्चानुदात्तं स्वरितम् ॥ १३५ ॥ निहितमुदात्तस्वरितपरम् ॥ १३६ ॥ अनवग्रहे[2] ॥ १३७ ॥ स्वरितस्य चोत्तरो देशः प्रणिहन्यते ॥ १३८ ॥ स्वरितात्परमनुदात्तमुदात्तमयम् ॥१३९॥ अनेकमपि ॥ १४० ॥ ७ ॥

नोदात्त[3]स्वरितोदयम् ॥ १४१ ॥ द्विवर्णमेकवर्णवद्धारणात् स्वरमध्ये समानपदे ॥ १४२ ॥ ऐ[4]कारौकारौ च ॥ १४३ ॥ डढौ ळळ्हावेकेषाम् ॥ १४४ ॥ द्विसकारं शास्स्व रास्स्वेति ॥ १४५ ॥ ऋलवर्णे रेफलकारौ संश्लिष्टावश्रुतिधरावेकवर्णौ ॥ १४६ ॥ मात्रार्धमात्राणुमात्रा[5] वर्णापत्तीनाम् ॥ १४७ ॥ अनुस्वारो ह्रस्वपूर्वोऽध्यर्धमात्रा पूर्वा चार्धमात्रा[6] ॥ १४८ ॥ दीर्घादर्धमात्रा पूर्वा चाध्यर्धा ॥ १४९ ॥ द्वियकारम् ॥ १५० ॥ आप्याय्यमानो यमो रय्यै धाय्यारूपं श्रवाय्यं नृपाय्यं पौरुषेय्या हृदय्याय[7] सह रय्या निचाय्य सान्नाय्य्यं[8] सन्ताय्येति च

---

१. प्रउगमिति B K B[1] B[2]; प्रयुगमिति W S[1] S[2] S[3],
२. एके added on the margin in S[1].
३. उदात्त ( for नोदात्त-) W.
४. ए–S[1].
५. मात्राणुमात्रा B K.
६. –मात्रेति B K.
७. हृदय्याय W S[3]; हृदय्या B K S[1] S[2] B[2]; हृदयाय B[1].
८. सान्नाय्य B K S[1] B[1] B[2]; सान्नाय्य omitted in W S[2]; S[3] gives it on the margin.

॥ १५१ ॥ एकः ॥ १५२ ॥ ज्योतिश्च्यवनः श्येनः श्यामं श्यामाकाः श्येतो ज्येष्ठो ज्योग् ज्या च्छयति ॥ १५३ ॥ जुषस्व यविष्ठय शोचा यविष्ठयेति च ॥ १५४ ॥ स्येति[1] त्यत्वं च ॥ १५५ ॥ स्वरपूर्वाश्च शचजाः समानपदे द्विरुक्ताः ॥ १५६ ॥ व्यञ्जनपराश्च न ॥ १५७ ॥ कश्यपस्यानार्षेये[2] जातूकर्ण्यस्य ॥ १५८ ॥ उच्चैरजुमज्ञानश्च ॥ १५९ ॥ मर्त्तो वुरीत मर्त्तेष्वग्निः परो मर्त्तस्ते मर्त्त इति च ॥ १६० ॥ ८ ॥

अन्तःपदेऽपञ्चमः[3] पञ्चमेषु विच्छेदम् ॥ १६१ ॥ ऊष्मभ्यः पञ्चमेषु यमापत्तिर्दोषः ॥ १६२ ॥ स्फोटनं च ककारवर्गो वा स्पर्शात् ॥ १६३ ॥ स्वरात् स्वरे[4] समानपदे[5] जो यं न तु ऋकारे ॥ १६४ ॥ ख्यातेः खयौ कशौ[6] गार्ग्यः सख्योरव्यमुख्यवर्जम् ॥ १६५ ॥ त्रिपदाद्यावर्तमाने संक्रमः ॥ १६६ ॥ द्विपदैकपदान्यप्यनुवाके ॥ १६७ ॥ अनन्तरे ॥ १६८ ॥ अपराङ्गे ॥ १६९ ॥ अस्वरविकारे ॥ १७० ॥ अलिङ्गविकारे ॥ १७१ ॥ असमाने ॥ १७२ ॥ त्रिरावृत्ते ॥ १७३ ॥ गूढे ॥ १७४ ॥ पदसमूहे ॥ १७५ ॥ संहितायां च[7] ॥ १७६ ॥ अवसानार्थं पुनर्ग्रहणम् ॥ १७७ ॥ अवि[8]कारार्थं च ॥ १७८ ॥ उत्सर्गश्च ॥ १७९ ॥ क्रमः स्मृतिप्रयोजनः ॥ १८० ॥ ९ ॥

---

१. स्येति B K $B^1$ $B^2$; श्येति $S^1$ $S^2$ W; श्येति corrected to स्येति $S^3$.

२. –षेयो $S^3$.

३. Sपञ्चमाः $S^1$ $S^2$.

४. स्वरे K $B^1$ $B^2$; स्वरे परे B W $S^1$ $S^2$ $S^3$.

५. समानपदे B K W $S^1$ $S^2$ $S^3$; पदे समाने $B^1$ $B^2$.

६. कशौ B K $B^1$ $B^2$; कसौ W $S^1$ $S^2$ $S^3$.

७. च omitted in B K.

८. अवि–B K $S^1$ $B^1$ $B^2$; अधि–W $S^2$; अधि–corrected to अवि–$S^3$.

द्वे द्वे पदे सन्दधात्युत्तरेणोत्तरमावसानादपृक्तवर्जम् ॥१८१॥ अपृक्तमध्यानि त्रीणि स त्रिक्रमः ॥ १८२ ॥ पुनराकारेणोत्तरम् ॥ १८३ ॥ सोषूणाभीषुणौ च ॥ १८४ ॥ चत्वार्यपृक्तपूर्वे नकारपरे सौ ॥ १८५ ॥ मकारपरे चैके ॥ १८६ ॥ पुनः सुपदेनोत्तरम् ॥ १८७ ॥ पूर्वस्योत्तरसंहितस्य स्थितोपस्थित-मवगृह्यस्य ॥ १८८ ॥ सुपदे शाकटायनः ॥ १८९ ॥ अन्तः-पददीर्घीभावे ॥ १९० ॥ विनामे ॥ १९१ ॥ प्रगृह्ये ॥ १९२ ॥ रिफितेऽनिरुक्ते ॥ १९३ ॥ अवसाने च ॥ १९४ ॥ यथा-समाम्नातं क्रमावसानं संक्रमेषु ॥ १९५ ॥ वृद्धं वृद्धिः ॥ १९६ ॥ ॥ १० ॥

॥ इति कात्यायनप्रातिशाख्यसूत्रे चतुर्थोऽध्यायः ॥



## अथ पञ्चमोऽध्यायः

समासेऽवग्रहो ह्रस्वसमकालः ॥ १ ॥ तरतमयोश्चातिशयेऽदक्षिणप्रत्यासङ्गे ॥ २ ॥ वीतमहूतमसूतमगोपातमरत्नधातमवसुधातमाः पूर्वेण ॥ ३ ॥ सर्वदेवजनेभ्यश्च ॥ ४ ॥ तूणवध्मन्नुत्तरेण ॥ ५ ॥ रायस्पोषदे त्रिजावेति च ॥ ६ ॥ बहुप्रकृतावागन्तुना पर्वणा ॥ ७ ॥ तद्वति[1] तद्धिते न्यायसंहितं चेत् ॥ ८ ॥ शस्त्वं त्रातातिषु च ॥ ९ ॥ धात्वर्थे यकारे स्वरपूर्वे ॥ १० ॥ वांसौ च भूतकाले स्वरेण ह्रस्वादनुषि ॥ ११ ॥ प्रतपूर्वविश्वेमर्तुभ्यस्था ॥ १२ ॥ ह्रस्वव्यञ्जनाभ्यां भकारादौ विभक्तिप्रत्यये ॥ १३ ॥ स्विति[2] चानतौ ॥ १४ ॥ वर्णसङ्ख्येन्यतरतः ॥ १५ ॥ अनुदात्तोपसर्गे चाख्याते ॥ १६ ॥ गिरि त्रशयोः ॥ १७ ॥ इवकाराम्रेडितायनेषु च[3] ॥ १८ ॥ एकात्समीची ॥ १९ ॥ त्वावतः शंयोर्बहिर्धास्मयुं मृन्मयीं[4] सुम्नयाशुया साधुया धृष्णुया विशालमनुया ॥ २० ॥ १ ॥

मृगयुमुभयादतोऽपामार्गकिम्पूरुषमिति च ॥ २१ ॥ पारावतानाग्निमारुताश्वेति जातूकर्ण्यस्य ॥ २२ ॥ अधीवासमित्येके ॥ २३ ॥ प्रतिषेधेनानवग्रहः[5] ॥ २४ ॥ उत्तरेण चाकारेण ॥२५॥ द्वापूर्वम् ॥ २६ ॥ संख्यापूर्वश्च धा ॥ २७ ॥ द्वन्द्वानि द्विवच-

---

१. तद्वति omitted in $S^1$.

२. सो इति W.

३. च omitted in W.

४. मृण्म–K.

५. प्रतिषेधेनान–W $S^1$ $S^2$ $B^2$; प्रतिषेधे ना–B K $S^3$ $B^1$.

नान्तानि स्वरान्तपूर्वपदानि[1] ॥ २८ ॥ तद्धिते चैकाक्षरवृद्धावनिहिते ॥ २९ ॥ अश्वतिसहत्योः क्लोपे ॥ ३० ॥ अनुरुसुभ्याम् ॥ ३१ ॥ समिदाभ्यां वत्सरः ॥ ३२ ॥ प्राग्निभ्यामनिन्धौ प्रश्लेषे ॥ ३३ ॥ पाङ्क्त्रानुदद्रोऽभ्राय संशयात् ॥ ३४ ॥ जनयत्या ओषधयो वृषायिषत नहि[2] चनास्मभ्यमजावयो वलगम् ॥ ३५ ॥ समानोऽनश्वमेधे ॥ ३६ ॥ वायु[3]रसजातः समुद्रमहोरात्रे विश्वानरो[4] विश्वाहाग्रयणो[5]ऽसपत्ना गोधा[6] गोधूमा आशुशुक्षणिर्न्यग्रोधः पुरोडाशः[7] ग्रावणेभिरशीतसं तस्करा[8] मस्मसाश्वत्थ उपस्तिर्माकिर्विश्वामित्रो गोपा[9] प्रउगसञ्ज्ञानि कक्षीवन्तमदधा[10] त्पवी[11] रुक्मीहारेण प्रावृता घनाघन ईदङ्चा[12] न्यादङ् शूघनासः[13] कुयवं कुचरः[14] प्रियङ्ग्वो नीवारो एकादश षोडश चन्द्रमा आयुवो[15] व्याघ्रो[16]ऽनड्वान् गविष्टिरः[17] कपर्दिने पुलस्तये

१. स्वर-( for स्वरान्त-) $S^1$.

२. नहि W $S^1$ $S^2$ $S^3$ $B^1$ $B^2$; omitted in B K.

३. -मेधो वायु-$S^1$.

४. -नरो B K $S^1$ $S^2$ $B^2$; -नराय W $B^1$; -नरो corrected to-नराय in $S^3$.

५. -ग्रणो B K.

६. गोधा omitted in $S^1$.

७. -डाशः B K $B^1$ $B^2$ $S^3$; -डाशं W $S^1$ $S^2$.

८. तस्करा B K W $S^1$ $S^2$; तस्करान् $S^3$; तस्करां $B^1$ $B^2$.

९. गोपाः $S^3$ ( really it reads गोपांः ).

१०. अधा-( for अदधा-) B; अश्रद्धां लांगलं $B^1$.

११. पवि-$S^1$,

१२. ईदङ्चा-B K $B^1$; ईदङ्गः-W $S^1$ $S^2$ $B^2$; ईदङ्ङ-$S^3$.

१३. -नास $S^3$.

१४. -चरं $S^3$.

१५. आयुवौ $S^3$.

१६. व्याघ्रा K.

१७. -नड्वानाविष्टि ( -स्थि-$S^1$ ) रः $S^1$ $S^2$.

निषङ्गिणे कुलालेभ्यः कर्मारेभ्यः पुञ्जिष्ठेभ्यो द्वीप्याय नीप्याय किंशिलायैलवृदाः[1] शूकराय शूकृताय चराचरेभ्यः पारावतान् गोलत्तिकाखुरजगरो विपन्यवो दाक्षायणा आयुधं सुरामं बृहस्पतिर्वनस्पतिर्नराशंसः सुरभि[2]र्नरिष्ठायै ॥ ३७ ॥ उत्तम्भनादीन्यादिसंशयात् ॥ ३८ ॥ विशौजा इत्यन्यायसमासात् ॥ ३९ ॥ दित्यौही तुर्यौही पष्ठौही हृदयौपशेनेति च ॥ ४० ॥ २ ॥

दुष्टरो विष्टरो विष्टपो विष्टम्भो विष्टम्भनीम् ॥ ४१ ॥ ऊवध्यमुगणा उख[3] इष्कृतिरिष्कर्तारमुदरमित्युपसर्गैकदेशलोपात्[4] ॥ ४२ ॥ संस्कृतं संस्कृतिर्मांस्पचन्याः[5] पुँ[6]श्चलूमित्यनुनासिकोपधत्वात् ॥ ४३ ॥ अनुस्वारागमत्वादित्येके ॥ ४४ ॥ परीत्तोऽवत्तानां सुविताय सग्धिरिति[7] च ॥ ४५ ॥ वृद्धं वृद्धिः ॥ ४६ ॥ ३ ॥

॥ इति कात्यायनप्रातिशाख्यसूत्रे पञ्चमोऽध्यायः ॥



---

१. –वृदाः K B.

२. सुराभि–B; सुरभी–$S^1$.

३. उख इ– B K $S^2$ $B^2$ ( $B^2$ corrects उषे–to उखे इ–); उष इ–$S^1$ $S^3$; उखे–W $B^1$.

४. –लोपः W.

५. –न्या $S^1$ $B^1$.

६. पुँ– W $S^2$; पुं– $B^2$ $S^1$; पूँ– B K $B^1$ $S^3$.

७. संधिरिति $S^1$.

# अथ षष्ठोऽध्यायः

अनुदात्तमाख्यातमामन्त्रितवत् ॥१॥ उपसर्ग उपसर्गे ॥२॥ आम्रेडिते चोत्तरः[1] ॥ ३ ॥ कृदाख्यातयोश्चोदात्तयोः ॥ ४ ॥ नास्त्येकाक्षरश्च[2] स्वरसन्धेयेऽकृति ॥५॥ आ पूतजातयोः ॥ ६ ॥ अधि नि प्र प्रति श्रितात्रिणं[3] भानवः[4] पचतेषु ॥ ७ ॥ उज्जेषमावर्तं आपनीफणत् संसनिष्यदत् संवतं प्रयाणं संचरन्तं संरभध्वं प्रसितिं विक्रमस्वेत्येतेष्वनु ॥ ८ ॥ ओप प्रोदात्ते ॥ ९ ॥ अभिप्रेह्युपसंप्रयात प्रत्यातनुष्वासुपाव[5] ॥ १० ॥ प्रकृत्याख्यातसाख्यातपूर्वम् ॥ ११ ॥ उदात्ताच्चामन्त्रितादनन्तरम् ॥ १२ ॥ एकान्तरादपि ॥ १३ ॥ यद्वृत्तोपपदाच्च ॥ १४ ॥ हेश्च ॥१५॥ उत्तरेऽपि ॥ १६ ॥ नेत् ॥ १७ ॥ समनसस्करत् ॥ १८ ॥ द्वयोः पूर्वं समुच्चये ॥ १९ ॥ वा विचारणे ॥ २० ॥ १ ॥

अह विनियोगे ॥ २१ ॥ एवावधारणे ॥ २२ ॥[6] उपपदाप्रयोगेऽपि च[7] ॥ २३ ॥ परोपापाव प्रति पर्यन्वप्यत्यध्याङ् प्र सं निर्दुरुन्नि वि स्वभि ॥ २४ ॥ द्विस्पर्शम् ॥ २५ ॥ वेत्तु विश्वास्मद्र्यक् पात्रमभि त्यम् मृत्तिका द्धं दात्रं समाववर्त्यृ-

---

१. चोत्तरम् $S^1$ $S^2$.

२. –श्च omitted in $S^1$; supplied on the margin in $S^3$.

३. –त्रिणं–S $B^1$ $S^3$; –त्रिण–B K W $S^2$; . $B^2$ corrects–त्रिणं–to–त्रिण–.

४. –भानवः–$S^3$; –भानव–B K $S^1$ W $S^2$; –भानु–$B^1$ $B^2$.

५. च added in W $B^2$ ( $B^2$ adds च on the margin ).

६. The Sūtra एतावधारणे precedes अह विनियोगे in $B^1$ $B^2$.

७. च omitted in $B^1$ $B^2$ W ; च deleted in $S^1$.

द्विर्वृ[1] द्विरराद्ध्या अर्द्धशुद्धबुद्ध[2] नक्क्तं[3] निषण्णस्विन्नान्नसन्नाश्च ॥२६॥ न[4] क्षवृचिश्विसत येभ्यस्त्रैकम्[5] ॥ २७ ॥ इध्रयाय[6] वार्ध्रीन-सोद्राश्वराश्चेत् ॥२८॥ उपोत्थित उत्त्तम्भनमुत्तभानोत्थायोत्थि-तायेति त्रीणि ॥ २९ ॥ वर्हिरङ्ङ्क्ताम् भद्रेण पृङ्ङ्क्त पङ्ङ्क्तिः समङ्ङ्धि परिवृङ्ङ्धि पाङ्ङ्त्रानिति द्वावनुनासिकौ पूर्वावार-पन्तीवर्जमिति[7] ॥ ३० ॥ वृद्धं वृद्धिः ॥ ३१ ॥ २ ॥

॥ इति कात्यायनप्रातिशाख्यसूत्रे षष्ठोऽध्यायः ॥



१. -द्विवृ-S² S³ B¹.
२. अर्द्धः शुद्धबुद्धः B¹.
३. नक्त-B¹.
४, न B K S² S³ ; न omitted in W B¹ B² S¹.
५. -त्त-S³.
६. इध्रयाय-B² S¹ ; ईध्रयाय B K S³ ; वीध्रयाय S² ; ईध्रय-W B¹.
७. -त्रर्जमिति B¹ B² S³ ; -वर्जम् W ; -वर्जमिति च B K S¹ S².

# अथ सप्तमोऽध्यायः

अथावसानानि ॥ १ ॥ कण्ठ्यस्वरमेकारेण परिगृह्णीयात् प्लुतवर्जम् ॥ २ ॥ इ[1]वर्णमीकारेण ॥ ३ ॥ उवर्णं वकारेण ॥४॥ औकारं च ॥ ५ ॥ ह्रस्वकण्ठ्योपधं विसर्जनीयान्तमरिफितं विवृत्त्या ॥ ६ ॥ दीर्घकण्ठ्योपधं विसर्जनीयान्तमेकारान्तमैकारान्तं प्लुतं प्रगृह्यं च ॥ ७ ॥ औकारान्तं चैके ॥ ८ ॥ भाव्युपध[2]रिद्विसर्जनीयान्तानि रेफेण ॥ ९ ॥ प्रथमान्तं तृतीयेन ॥१०॥ उत्तमान्तमुत्तमेन ॥ ११ ॥ वृद्धं वृद्धिः ॥ १२ ॥

॥ इति कात्यायनप्रातिशाख्यसूत्रे सप्तमोऽध्यायः ॥

---

१. इ-W $S^1$ $S^2$ $S^3$ $B^1$ $B^2$ ; ई-B K.

२. भाव्युपध-W $B^2$ ; भाव्युपधं $B^1$ ; भाव्युपधं च B K ; भाव्युपधश्च $S^1$ $S^2$ $S^3$.

# अथ अष्टमोऽध्यायः

अथातो वर्णसमाम्नायं व्याख्यास्यामः ॥ १ ॥ तत्र स्वराः प्रथमम्[1] ॥ २ ॥ अ इति आ इति आ ३ इति ॥ ३ ॥ इ इति ई इति ई ३ इति ॥ ४ ॥ उ इति ऊ इति ऊ ३ इति ॥ ५ ॥ ऋ इति ॠ इति ॠ ३ इति ॥ ६ ॥ ऌ इति ॡ इति ॡ ३ इति ॥७॥ अथ सन्ध्यक्षराणि ॥ ८ ॥ ए इति ए ३ इति ॥९॥ ओ इति ओ ३ इति ॥ १० ॥ ऐ इति ऐ३ इति ॥ ११ ॥ औ इति औ ३ इति ॥ १२ ॥ इति स्वराः ॥ १३ ॥ अथ व्यञ्जनानि ॥ १४ ॥ किति खिति गिति घिति ङिति कवर्गः ॥ १५ ॥ चिति छिति जिति झिति ञिति चवर्गः ॥ १६ ॥ टिति ठिति डिति ढिति णिति टवर्गः ॥ १७ ॥ तिति थिति दिति धिति निति तवर्गः ॥ १८ ॥ पिति फिति बिति भिति मिति पवर्गः ॥ १९ ॥ इति स्पर्शाः ॥ २० ॥ १ ॥

अथान्तःस्थाः ॥ २१ ॥ यिति रिति लिति विति ॥ २२ ॥ अथोष्माणः ॥ २३ ॥ शिति षिति सिति हिति ॥ २४ ॥ अथायोगवाहाः[2] ॥ २५ ॥ अः इति विसर्जनीयः[3] ॥ २६ ॥ ᳵक इति जिह्वामूलीयः ॥ २७ ॥ ᳶप इत्युपध्मानीयः ॥ २८ ॥ अं इत्यनुस्वारः ॥ २९ ॥ हुँ इति नासिक्यः ॥ ३० ॥ कुँ खुँ गुँ घुँ इति यमाः ॥ ३१ ॥ एते पञ्चषष्टिवर्णा ब्रह्मराशिरात्मा

---

१. तत्र प्रथमं स्वराः B[1] ; तत्र प्रथमाः स्वराः B[2].

२. अथायोग–B K B[1] S[1] S[3]; अथ योग-W B[2] S[2].

३. This Sūtra is read after अं इत्यनुस्वारः in B K S[2].

वाचः[१] ॥३२॥ यत्किञ्चिद्वाङ्मयं लोके सर्वमत्र प्रयुज्यते[२] ॥३३॥ शुचिना ॥ ३४ ॥ शुचौ देशे ॥ ३५ ॥ शूद्रपतितयोरसंश्रावं[३] स्वाध्यायोऽध्येतव्यः ॥ ३६ ॥ ज्ञाने[४] ॥३७॥ पौरुष्यम् ॥३८॥ स्वर्ग्यम् ॥ ३९ ॥ यशस्यम् ॥ ४० ॥ २ ॥

आयुष्यम् ॥ ४१ ॥[५] अथापि भवति ॥ ४२ ॥

वेदस्याध्ययनाद् धर्मः संप्रदानात्तथा श्रुतेः ।
वर्णशोऽक्षरशो ज्ञानाद्विभक्तिपदशोऽपि च ॥ ४३ ॥
त्रयोविंशतिरुच्यन्ते स्वराः शब्दार्थचिन्तकैः ।
द्विचत्वारिंशद् व्यञ्जनान्येतावान्वर्णसंग्रहः ॥ ४४ ॥

तस्मिन् ळळ्हजिह्वामूलीयोपध्मानीयनासिक्या न सन्ति माध्यन्दिनानाम् ॥४५॥ ऌकारो दीर्घः[६] प्लुताश्चोक्तवर्जम् ॥४६॥ अथ[७] वर्णदेवताः ॥ ४७ ॥ आग्नेयाः कण्ठ्याः ॥ ४८ ॥ नैर्ऋत्या जिह्वामूलीयाः ॥ ४९ ॥ सौम्यास्तालव्याः ॥ ५० ॥ रौद्रा[८] दन्त्याः ॥ ५१ ॥ ओष्ठ्या आश्विनाः[९] ॥ ५२ ॥ वायव्या मूर्धन्याः ॥ ५३ ॥ शेषा वैश्वदेवाः ॥ ५४ ॥[१०] तत्समुदायोऽक्षरम् ॥ ५५ ॥ वर्णो वा ॥५६॥ अक्षरसमुदायः पदम् ॥५७॥

---

१, आत्मा वाचः W B² S¹ S² S³ ; आत्मवाचः B K B¹.
२. प्रयुज्यते W S¹ S² S³ B¹ B² ; प्रतिष्ठितम् B K.
३. –श्राव्यं W.
४. ज्ञानम् W.
५. तथा विभक्तिपरिज्ञानम् added as a Sūtra in B K.
६. ऌकारो दीर्घः B K B¹ ( दीर्घ B¹ ); ऌकारः W ; ऌकारः S¹ S² ऌदीर्घः S³ ; one Fol. is here missing in B².
७. अथ W ; omitted in all the rest.
८. रौद्रया S³.
९. आश्विनाः W B K B¹ S² ; आश्विन्याः S¹ S³.
१०. अथ वर्णदेवताः to वैश्वदेवाः read as one Sūtra ( No. 47 ) in W.

अक्षरं वा ॥ ५८ ॥ तच्चतुर्धा ॥ ५९ ॥ नामाख्यातोपसर्ग-निपाताः ॥ ६० ॥ ३ ॥

तत्र प्रतिविशेषः[१] ॥ ६१ ॥

क्रियावाचकमाख्यातमुपसर्गो विशेषकृत् ।

सत्त्वाभिधायकं नाम निपातः पादपूरणः[२] ॥ ६२ ॥

चतुर्दश निपाता येऽनुदात्तास्तेऽपि सञ्चिताः[३] ।

निहन्यते खल्वाख्यातमुपसर्गाणां[४] चतुष्टये[५] ॥ ६३ ॥

अथ पदगोत्राणि ॥ ६४ ॥

भारद्वाजकमाख्यातं भार्गवं नाम भाष्यते[६] ।

वासिष्ठ उपसर्गस्तु[७] निपातः काश्यपः स्मृतः ॥ ६५ ॥

अथ पददेवताः[८] ॥ ६६ ॥

सर्वं तु सौम्यमाख्यातं नाम वायव्यमिष्यते ।

आग्नेयस्तूपसर्गः स्यान्निपातो वारुणः स्मृतः ॥ ६७ ॥[९]

इत्याह स्वरसंस्कारप्रतिष्ठापयिता भगवान् कात्यायनः[१०] ॥ ६८ ॥ वृद्धं वृद्धिः ॥ ६९ ॥ ४ ॥

॥ इति कात्यायनप्रातिशाख्यसूत्रेऽष्टमोऽध्यायः ॥

---

१. प्रति विशेषः B K $B^1$ S $S^2$ $S^3$ ; तत्र विशेषः W.

२. निपाताः पादपूरणाः $S^3$.

३. संधिताः $S^1$ $S^3$.

४. उपसर्गाणां W ; उपसर्ग–all the rest.

५. तुष्टये W ; चतुष्टये all the rest.

६. भाप्यते B K $B^2$ $S^2$ ; भण्यते $B^1$ ; इष्यते W ; शिष्यते $S^1$ $S^3$.

७. –सर्गः स्यान् W.

८. –देवताश्च $S^1$ $S^3$.

९. अथ वर्णदेवताः added as a Sūtra in B K.

१०. कात्यायनः कात्यायनः W.

# ADHYĀYA I

स्वरसंस्कारयोश्छन्दसि नियमः ॥ १ ॥

The accent and the phonetic modification ( संस्कार ) ( which are to be expounded in this treatise ) are to be taken as fixed in the छन्दस् or Veda.

लौकिकानामर्थपूर्वकत्वात् ॥ २ ॥

( This is not so ) in the case of words in common usage ( लैकिकानाम्, ), because they are used according to ( the intended ) meaning.

न समत्वात् ॥ ३ ॥

Not so, on account of similarity ( between the Vedic and non-Vedic words ).

स्याद्वाम्नायधर्मित्वाच्छन्दसि नियमः ॥ ४ ॥

Or, the fixity ( with regard to the accent and the phonetic modification ) in the छन्दस् is due to its having the nature of a sacred traditional text ( आम्नाय ).

यत्तन्न ॥ ५ ॥

That which is not ( quite evident about sound or speech wili be stated in the following ).

वायुः खात् ॥ ६ ॥

( Coming out of the lungs ) the air ( passes ) through the glottis ( ख ).

शब्दस्तत् ॥ ७ ॥

That is sound ( breath or voice ).

सङ्करोप ॥ ८ ॥

Due to proper mode of articulation ( and )

स सङ्घातादीन् वाक् ॥ ९ ॥

the contact etc. ( of the organs of pronunciation ) that ( sound becomes ) speech.

or

the effort ( on the part of the speaker ) and other factors that ( sound becomes ) speech.

त्रीणि स्थानानि ॥ १० ॥

( There are ) three positions or qualities ( स्थानानि, i.e., the soft, middle and loud, of voice ).[1]

द्वे करणे ॥ ११ ॥

The breathing cr the emission of the air ( करण ) is of two kinds ( i. e., breath or voice ).

शरीरात् ॥ १२ ॥

( The air under reference comes ) out of the body ( i. e., the lungs ).

शरीरम् ॥ १३ ॥

( It assumes ) the form ( शरीरम् ) (i. e., becomes articulate).

शरीरे ॥ १४ ॥

( That takes place ) in the body ( i.e., inside the mouth ).

1. Cp. *Ṛgveda-Prātiśākhya* XIII. 42.

तेषां समूहात् स उदयँस्त्रैकाल्यम् ॥ १५ ॥

Arising out o the combination of them ( i.e., the above factors ) that ( i.e., the air ) ( in the form of speech ) (expresses objects of ) all the three times ( i.e., the past, the present and the future ).

ओंकारः स्वाध्यायादौ ॥ १६ ॥

ओम् ( is to be recited ) in the beginning of Vedic study.

ओंकाराथकारौ ॥ १७ ॥

( One should take note of t he two words ) ओम् and अथ.

अ कारं वेदेषु ॥ १८ ॥

ओम् ( is to be recited ) with the Vedic texts.

अथकारं भाष्येषु ॥ १९ ॥

अथ ( is to be used ) in the commentaries ( or, in the works other than the Vedas ).

प्रयतः ॥ २० ॥

( While studying the Veda one must get oneself ) purified.

शुचौ ॥ २१ ॥

( One should study ) in a clean place.

इष्टम् ॥ २२ ॥

( The posture should be ) agreeable.

ऋतुं प्राप्य ॥ २३ ॥

Having approached the proger season.

योजनान्न परम् ॥ २४ ॥

Without going beyond a योजन.

नुश्चाम्रेडिते ॥ ८ ॥

Also *n* ( at the end of a word becomes *s* ), when the same word is repeated.

अन्तःस्थासन्तःस्थास्वनुनासिकां परसस्थानाम् ॥ ९ ॥

When semi-vowels follow, (*m*) becomes a nasal semi-vowel, having the same place of articulation with the following semi-vowel.

हि ॥ १० ॥

Here ends the first section of the Euphonic Modifications. ( Here refer to Sūtras III. 3–5 ).

स्पर्शे परपञ्चमम् ॥ ११ ॥

If a contact consonant follows, ( *m* ) becomes the fifth of the class of the following consonant.

तकारो ले लम् ॥ १२ ॥

*T* becomes *l* wheu *l* follows.

नुश्चानुनासिकम् ॥ १३ ॥

*N* becomes a nasal ( *l*, when *l* follows ).

ङ्नौ क्ताभ्यां सकारे ॥ १४ ॥

*Ṅ* and *n* followed by *s* are ( intervened respectively ) by *k* and *t*.

न दाल्भ्यस्य ॥ १५ ॥

But not according to the teacher Dālbhya.

रलावृलृवर्णाभ्यामूष्मणि स्वरोदये सर्वत्र ॥ १६ ॥

*R* and *l*, followed by a breathing followed by a vowel, are always ( intervened respectively ) by sounds similar to *ṛ* and *ḷ*.

प्रगृह्यं चर्चायामितिना पदेषु ॥ १७ ॥

(A word ending in) a Pragṛhya vowel, when repeated in the Pada-text, is intervened by the word इति.

रिफितं च संहितायामनिरुक्तम् ॥ १८ ॥

Also a rhotacized word, not indicated as such in the Saṁhitā-text, (when repeated in thc Pada-text, is intervened by इति).

पदावृत्तौ चान्तरेण ॥ १९ ॥

Also when a word is repeated it is intervened ( by इति ).

क्रमोक्तावृत्तिः पदेषु ॥ २० ॥

The repetition of words (with इति interposed), prescribed in the Krama text, ( also takes place ) in the Pada-text.

सुपदावसानवर्जम् ॥ २१ ॥

With the exception of the word सु and pause.

अनितावन्तर्विकारागमं प्रागुक्त्वा ॥ २२ ॥

In case of words, in which a modification or insertion has taken place according to the Sūtras beginning with the Sūtra अनितावध्याये ( III. 19 ) to the end of अध्याय III, ( the repetition with इति interposed takes place ), after the word has been recited as such ( in the Pada-text ).

विश्पतीवेति च ॥ २३ ॥

Also the word विश्पतीव ( should be shown as such before it is repeated with इति intervened ).

स्वरश्छकारे चकारेण सर्वत्र ॥ २४ ॥

A vowel followed by *ch* (is) always ( intervened ) by *c*.

यस्यातिहाय सहेति न ॥ २५ ॥

But not in case of the words यस्य, अतिहाय and सह.

विश्वा ऊष्मान्तं परि द्विषस्त्वं त्वां यदजयो विराजत्यनिरा अवीवृधन् परिष्ठाः सुक्षितय आशा ओषधीराभाह्यमीवा हि मायास्तेऽसीत्येतेषु ॥ २६ ॥

The word विश्वा should be taken as ending in Visarjanīya (i.e., as विश्वाः), when the words परि द्विषः, त्वम्, त्वाम्, यदजयः, विराजति, अनिराः, अवीवृधन् , परिष्ठाः, सुक्षितयः, आशाः, ओषधीः, आभाहि, अमीवाः, हि मायाः, ते and असि follow.

पृथिव्या स्वरान्तं सम्भव शुक्रो मन्थी पृथिवीं परो देवेभिरित्येतेषु ॥ २७ ॥

The word पृथिव्या should be taken as ending in a vowel, when the words संभव, शुक्रः, मन्थी, पृथिवीम्, परो देवेभिः follow.

च विश्वा वो ब्रह्म विश्वा हरी युक्तास्ते शफानां जजान नु कमित्येतेष्विमा ॥ २८ ॥

The word इमा ( should be taken as ending in a vowel ), when the words च विश्वा, वः, ब्रह्म, विश्वा, हरी, युक्ताः, ते, शफानाम्, जजान, and नु कम् follow.

हवेमोतेमा च ॥ २९ ॥

The words हवेमा and उतेमा also ( end in a vowel ).

विष्णो ते बभूव नासत्या भिषजा न आवोढं या देवा हविषो नो मृडातो नो अच्छ विमुञ्चेत्येतेषु ता ॥ ३० ॥

The word ता (ends in a vowel), when the words विष्णो, ते, बभूव, नासत्या, भिषजा, न आवोढम्, या देवाः, हविषः, नो मृडातः, नो अच्छ and विमुञ्च follow.

ता ता च ॥ ३१ ॥

The words ता, ता also ( end in a vowel ).

धिष्ण्या वरिवोविदं धिष्ण्या युवमिति च ॥ ३२ ॥

(The word धिष्ण्या ends in a vowel in the two combinations—) धिष्ण्या वरिवोविदम् and धिष्ण्या युवम्.

भाव्युपधश्च रिद्धिसर्जनीयः ॥ ३३ ॥

( In the followiug ) 'a Visarjanīya with a penultimate vowel other than *a* and *ā* and a rhotacized Visarjanīya' ( both are to be taken as understood ).

रेफे लुप्यते दीर्घं चोपधा ॥ ३४ ॥

( A Visarjanīya with a penultimate vowel other than *a* and *ā* or a rhotacized Visarjanīya ) are dropped when *r* follows and its penultimate vowel is lengthened.

रेफं स्वरधौ ॥ ३५ ॥

( It ) becomes *r* when a vowel or a consonant called धि ( see I. 53 ) follows.

कण्ठ्यपूर्वो यकारमरिफितः ॥ ३६ ॥

( A Visarjanīya ) preceded by *a* or *ā*, if not rhotacized, becomes *y* ( when a vowel follows ).

लोपं धौ ॥ ३७ ॥

( It ) is dropped when धि-consonants follow.

भूमेश्चाकारेऽपृक्ते ॥ ३८ ॥

( Visarjanīya ) of the word भूमिः ( is dropped ) when *ā* as an independent word follows.

यकाराकारयोर्जास्पत्ये पदे ॥ ३९ ॥

In the word जास्पत्य both *y* and *ā* ( are to be taken as dropped ).

अलोपो मांस्पचयाः ॥ ४० ॥

In मांस्पचन्याः *a* ( of the word मांस ) is dropped.

सर्वो अःकार ओकारम् ॥ ४१ ॥

( Before धि-consonants ) the whole of *aḥ* becomes *o*.

अकारे च ॥ ४२ ॥

Also when *a* follows.

एषो ह च ॥ ४३ ॥

Also in एषो when *h* follows.

स्वो रुहावहश्च रात्र्याम् ॥ ४४ ॥

In स्वः before the root रुह्, and in अहः before the word रात्रि, ( *aḥ* becomes *o* ).

स्वरे भाव्यन्तःस्थाम् ॥ ४५ ॥

A vowel called भाविन् ( see Sūtra I. 46 ) becomes a semi-vowel when a vowel follows.

सन्ध्यक्षरमयवायावम् ॥ ४६ ॥

Diphthongs ( *e, o, ai, au* ) are respectively changed into अय्, अव्, आय्, आव्, ( when a vowel follows ).

उदात्तस्यान्तःस्थीभावे स्वरितं परमनुदात्तम् ॥ ४७ ॥

When a vowel having acute accent is changed into a semi-vowel, the following grave becomes circumflex.

कण्ठ्य ऋकारे ह्रस्वम् ॥ ४८ ॥

A ( long ) guttural vowel is shortened when *ṛ* follows.

अथैकमुत्तरश्च ॥ ४९ ॥

Henceforth the words '( the preceding ) and the following ( vowels ) become one' ( are to continue in the following ).

सिं सवर्णे दीर्घम् ॥ ५० ॥

The first eight vowels ( *a, ā, i, ī, u, ū, ṛ, ṝ* ), when followed by a homogeneos vowel, are ( together with the following vowel ) changed into a long vowel.

## अनुनासिकवत्यनुनासिकम् ॥ ५१ ॥

In case the following vowel is a nasal, ( the vowel resulting from the combination is also ) a nasal.

## कण्ठ्यादिवर्णे एकारम् ॥ ५२ ॥

*A* ( i.e., *a* or *ā* ), when followed by *i* (i.e., *l* or *ī*), is (together with the following vowel ) changed into *e*.

## उवर्णे ओकारम् ॥ ५३ ॥

*A* ( i. e., *a* or *ā* ), when followed by *u*) i. e., *u* or *ū*), is ( together with the following vowel ) changed into *o*.

## समुद्रस्येमँस्त्वेमँस्त्वोम्नन्निति च ॥ ५४ ॥

( *A*, i.e. *a* or *ā*, together with the following *e* and *o* ) in the special cases समुद्रस्येमन् ( =समुद्रस्य एमन् ), त्वेमन् ( =त्वा एमन् ) and त्वोम्नन् ( =त्वा ओम्नन् ) ( is respectively changed into *e* and *o*).

## एजत्योजोरेकेषाम् ॥ ५५ ॥

According to some teachers ( *a* together with the following e and *o* ) in the words एजति and ओजः ( is respectively changed into *e* and *o* ).

## संध्यक्षर ऐकारौकारौ ॥ ५६ ॥

( *A*, i.e., *a* or *ā* ), followed by a diphthong, is ( together with the following vowel ) changed into *ai* and *au* ( i.e., it becomes *ai* when *e* or *ai* follows and becomes *au* when *o* or *au* follows ).

## वाहौ च स्वरभूते ॥ ५७॥

( *A* ), followed by the root वह्, (with its initial letter) having been changed into a vowel, ( is, together with the following vowel, changed into *au* ).

## आरमृकारोऽपृक्तात् ॥ ५८ ॥

( *Ā* ), if an independent word, when followed by *ṛ*, is ( together with the following vowel ) changed into *ār*.

ऌकारश्चाल्कारम् ॥ ५९ ॥

( *Ā*, if an independent word, ) when followed by *ḷ*, is ( together with the following vowel ) changed into *āl*.

एदोद्भ्यां पूर्वमकारः ॥ ६० ॥

*A*, preceded by *e* or *o*, ( becomes one ) with the preceding vowel.

तौ चेदुदात्तावनुदात्ते स्वरितौ ॥ ६१ ॥

If those ( *e* and *o* ) are acute and are followed by a grave ( *a* ), the vowel resulting from their combination is circumflex.

न देशेऽभवति ॥ ६२ ॥

( The resulting vowel ) does not become ( circumflex ) in the combination देशेऽभवत् ( = देशे अभवत् ).

गाहमानः शिवो भरन्तो द्वेषोभ्यो जम्भयन्तो वाजे वाजजितो मदन्तः शोचेऽवसे सुषुवे ज्योते सुपर्णो वीरुधः सुवीरो धातवे सूनवे द्रूणान आशवो वहतः संक्रन्दनो बाहवोऽयुध्योऽद्रुहः ॥ ६३ ॥

( *A* following *e* or *o* in the words ). गाहमानः, शिवः, भरन्तः, द्वेषोभ्यः, जम्भयन्तः, वाजे, वाजजितः, मदन्तः, शोचे, अवसे, सुषुवे, ज्योते, सुपर्णः, वीरुधः, सुवीरः, धातवे, सूनवे, द्रूणानः, आशवः, वहतः, संक्रन्दनः, बाहवः, अयुध्यः and अद्रुहः (becomes one with the preceding vowel).

वोऽहं सोऽहं सोऽस्माकं तेऽभिगरो वोऽर्वाची ॥ ६४ ॥

( In the combinations ) वोऽहम्, सोऽहम्, सोऽस्माकम्, तेऽभिगरः and वोऽर्वाची ( the initial *a* of the following word becomes one with the preceding vowel ).

येऽन्नात्रयोः ॥ ६५ ॥

( The initial *a* ) of the words अन्न and अत्र, if preceded by ये ( becomes one with the preceding vowel ).

अविद्यासम्भूत्योश्च ॥ ६६ ॥

( The initial *a* ) of the words अविद्या and असम्भूति, ( if preceded by ये, becomes one with the preceding vowel ).

उपस्थेऽन्तस्तेभ्योऽकरम् ॥ ६७ ॥

( The absorption of *a* appears in the following combinations of two words ) उपस्थेऽन्तः, तेभ्योऽकरम्.

नमोऽस्त्वसौत्रामण्याम् ॥ ६८ ॥

( The absorption of *a* appears in the combination ) नमोऽस्तु, if it does not occur in the सौत्रामणी ( i.e., Adhyāyas XIX to XXI ).

विश्वेऽग्रे विशो रायोऽनग्नौ ॥ ६९ ॥

(Initial *a* following the words) विश्वे, अग्रे, विशो, रायो ( becomes one with the preceding vowel ), but not in the section dealing with अग्निचयन ( i.e. Addhyāyas XI to XVIII ).

सूर्योऽग्नेऽभौ ॥ ७० ॥

( Initial *a* of the word ) अभि ( following the words ) सूर्यो and अग्ने ( becomes one with the preceding vowel ).

रिपो यवसे पुरुप्रियोऽन्नपतेऽर्णवे ॥ ७१ ॥

( Initial *a* following the words ) रिपो, यवसे, पुरुप्रियो, अन्नपते and अर्णवे ( becomes one with the preceding vowel ).

व्यपरे च ॥ ७२ ॥

( Initial *a* ) also followed by *v* or *y* ( becomes one with the preceding *e* and *o* ).

गवे मे मनसो वाजयन्तः सोम्यासः पाशिनो विदानोऽनृते मूजवतो वृष्णेऽपाको दीदिवस्त्रयस्त्रिंशे ब्रह्मणे यको रथो विश्वतः पादो वसन्तः ॥ ७३ ॥

( Initial *a* following *e* or *o* in the words ) गवे, मे, मनसः, वाजयन्तः, सोम्यासः, पाशिनः, विदानः, अनृते, मूजवतः, वृष्णे, अपाकः, दीदिवः, त्रयस्त्रिंशे, ब्रह्मणे, यकः, रथः, विश्वतः, पादः and वसन्तः (becomes one with the preceding vowel ).

अवोऽस्त्वग्ने गृहपतेऽभि सत्वानोऽहं नोऽजस्रया विमानोऽजस्रः सुतेऽश्विना नमोऽग्नये तेऽग्रं तेऽग्रे वृक्षस्य प्रथमोऽन्तस्तेऽन्येन ॥ ७४ ॥

( The absorption of initial *a* takes place in the following combinations— ) अवोऽस्तु, अग्ने गृहपतेऽभि, सत्वानोऽहम्, नोऽजस्रया, विमानोऽजस्रः, सुतेऽश्विना, नमोऽग्नये, तेऽग्रम्, तेऽग्रे वृक्षस्य, प्रथमोऽन्तः and तेऽन्येन.

पणयो जहीमोऽम्बिके ॥ ७५ ॥

( Initial *a* following the words ) पणयो, जहीमो and अम्बिके ( becomes one with the preceding vowel ).

नोनुमोऽदुग्धा इव प्रचेतसोऽश्वान्नरोऽस्माकं वृषपाणयोऽश्वाः प्रदिशोऽनूदितेऽनागा अन्धसोऽर्चा पनस्यतेऽद्धा यज्ञियेभ्योऽमृतत्वं विपश्चितोऽभि जनोऽनमीव आयवोऽनु नोऽद्य देशेऽभवद् वयुनेऽजनिष्ट विद्मनापसोऽजायन्त पूर्व्यासोऽरेणवो नोऽश्मा नोऽदितिर्नोऽहिः ॥ ७६ ॥

( The absorption of initial *a* appears in the following combinations—) नोनुमोऽदुग्धा इव, प्रचेतसोऽश्वान्, नरोऽस्माकम्, वृषपाणयोऽश्वाः, प्रदिशोऽनु, उदितेऽनागाः, अन्धसोऽर्चा, पनस्यतेऽद्धा, यज्ञियेभ्योऽमृतत्वम्, विपश्चितोऽभि, जनोऽनमीवः, आयवोऽनु, नोऽद्य, देशेऽभवत्, वयुनेऽजनिष्ट, विद्मनापसोऽजायन्त, पूर्व्यासोऽरेणवः, नोऽश्मा, नोऽदितिः and नोऽहिः.

ब्राह्मणः ॥ ७७ ॥

( Initial *a* following the word ) ब्राह्मणः ( = ब्राह्मणो ) ( becomes one with the preceding vowel ).

यजुष्षु च ॥ ७८ ॥

( Initial *a*, preceded by *e* or *o*, becomes one with the preceding vowel ) even in the यजुः–mantras.

संक्रमे च सर्वत्र ७९ ॥

Also in संक्रम ( i.e., coming together of two words in the Krama when repeated words between them have been passed over, *a* following *e* or *o* ) always ( i.e., both in Ṛg and Yajus becomes one with the preceding vowel ).

प्रकृतिभाव ऋक्षु ॥ ८० ॥ ४ ॥

In the Ṛks ( the initial *a*, preceded by *e* and *o*, ) remains as it is ( with the exception of the cases of absorption already mentioned ).

जुषाणश्चानध्वनि ॥

( The initial *a* ) if not that of अध्वन् ( preceded by ) जुषाणः ( i.e., जुषाणो ) ( remains as it is ).

ते चानुदात्तमनुदात्ते ॥ ८२ ॥

( Initial *a* ) if grave, ( preceded by ) ते, also grave, ( remains as it is ).

हेड आपो गुवोऽपाग्ने धीरासो देवास उरो रक्षा णो मो वैश्वानरो वृषभो वचः प्राण उदानोऽङ्ग इमा मे वृष्णो दशमास्योऽन्ध आवित्तोऽरिष्टो अर्जुनः प्रत्याश्रावः स्विष्टो घासे प्रणीतस्तेभ्यो नमो अस्तु दूरे नो अद्य यज्ञे सधस्थे सो अध्वरायेन्द्रे हिरण्यपर्णो द्वारो देवोऽब्दो रथिभ्यो महद्भ्यः संसदः ॥ ८३ ॥

( *E* or *o*, followed by initial *a*, remains as it is in the following words or word-groups— ) हेडः, आपः, गुवः, अपाग्ने, धीरासः, देवासः, उरः, रक्षा णः, मो, वैश्वानरः, वृषभः, वचः, प्राणः, उदानः, अङ्गे, इमा मे,

वृष्णः, दशमास्यः, अन्धः, आवित्तः, अरिष्टो अर्जुनः, प्रत्याश्रावः, स्विष्टः, घासे, प्रणीतः, तेभ्यो नमो अस्तु, दूरे, नो अद्य, यज्ञे, सधस्थे, सो अध्वराय, इन्द्रे, हिरण्यपर्णः, द्वारः, देवः, अब्दः, रथिभ्यः, महद्भ्यः and संसदः.

छन्दो अङ्कुपमङ्काङ्कमस्त्रीवयः ॥ ८४ ॥

The word छन्दो, ( followed by the words ) अङ्कुपम्, अङ्काङ्कम् and अस्त्रीवयः, ( remains as it is, i.e., it does not absorb the following *a* ).

का ध्रुवोती सदना होतारा ज्या स्वधा पृथिवी प्रतिमेमसदन्नश्यामाकर्मोर्ध्वमियमवस्तादुतास्तिषु ॥ ८५ ॥

( The words ) का, ध्रुवा, ऊती, सदना, होतारा, ज्या, स्वधा, पृथिवी and प्रतिमा respectively followed by ईम्, असदन्, अश्याम, अकर्म, ऊर्ध्वम्, इयम्, अवस्तात्, उत and अस्ति ( remain as they are ).

प्रगृह्यं स्वरे ॥ ८६ ॥

A Pragṛhya word, followed by a vowel, ( remains unchanged ).

न रोदसीमे ॥ ८७ ॥

रोदसी ( followed by ) इमे does not ( remain unchanged ).

विश्पतीवोपस्थिते ॥ ८८ ॥

विश्पती ( followed by ) इव, when accompanied by इति, ( remains unchanged ).

उकारोऽपृक्तोऽस्पर्शात् ॥ ८९ ॥

*U*, if an independent word and not preceded by a contact consonant, ( remains unchanged when followed by a vowel ).

प्लुतमितौ ॥ ९० ॥

A Pluta vowel ( remaias unchanged ) when followed by इति.

ओकारश्च ॥ ९१ ॥

Also *o*, ( followed by इति, remains unchanged ).

उकारोऽपृक्तो दीर्घमनुनासिकम् ॥ ९२ ॥

*U*, if an independent word, is both lengthened and nasalised ( when followed by इति ).

इतेश्च परं पदं चर्चायाम् ॥ ९३ ॥

Also the word ( *u* ), following इति in चर्चा ( = the repetition of the word with इति interposed ), ( is both lengthened and nasalised ).

तकारवर्गश्चकारवर्गे चकारवर्गम् ॥ ९४ ॥

The *t*–class consonants when followed by *c*–class consonants are changed into *c*–class consonants.

शकारे च ॥ ९५ ॥

Also when *ś* follows.

परश्चास्पर्शपरश्छम् ॥ ९६ ॥

The following ( *ś* ) ( in the above mentioned combinations ), if not followed by a contact consonant, is also changed into *ch.*

उदः स्तभाने लोपम् ॥ ९७ ॥

( The initial *s* ) of स्तभाने is dropped when preceded by उद्.

अश्वात् स्थे तकारं संज्ञायाम् ॥ ९८ ॥

( The initial *s* ) in स्थ, preceded by अश्व, is changed into *t*, when denoting a special object.

स्वरात् संयोगादिर्द्विरुच्यते सर्वत्र ॥ ९९ ॥

The first letter of a conjunct consonant, when preceded by a vowel, is always uttered twice.

परं तु रेफहकाराभ्याम् ॥ १०० ॥

But ( in case of a conjunct consonant beginning with *r* or *h* the consonant ) following *r* or *h* ( is doubled, instead of *r* and *h* ).

ऊष्मान्तःस्थाभ्यश्च स्पर्शः ॥ १०१ ॥

But a contact consonant following breathings and semi-vowels ( is doubled, instead of breathings and semi-vowels).

जिह्वामूलीयोपध्मानीयाभ्यां च ॥ १०२ ॥

( A contact consonant ) also following Jihvāmūlīya and Upadhmānīya ( is doubled ).

यैस्तु परं तैर्न पूर्वम् ॥ १०३ ॥

( A consonant ) preceding those ( consonants ) which cause ( the doubling of ) a following ( consonant ) is not ( doubled ).

नास्वरपूर्वा ऊष्मान्तःस्थाः ॥ १०४ ॥

( Contact consonants following ) breathings and semi-vowels, not preceded by a vowel, are not ( doubled ).

विसर्जनीयाद् व्यञ्जनपरः ॥ १०५ ॥

(A contact consonant ) following a Visarjanīya (is doubled), if it ( = the contact consonant ) is followed by a consonant.

ङ्नौ चेद् ध्रस्वपूर्वौ स्वरे पदान्तौ ॥ १०६ ॥

*Ṅ* and *n*, when finals of words and preceded by a short vowel, ( are doubled ), if a vowel follows.

संयोगपूर्वव्यञ्जनान्तावसानगताः स्वरा द्विमात्राः॥ १०७ ॥

Vowels, preceding a conjunct consonant, or which are followed by a consonant or occurring in pause, have two moras as their duration.

प्रथमैर्द्वितीयास्तृतीयैश्चतुर्थाः ॥ १०८ ॥

The second and fourth class-consonants ( are doubled respectively ) with the first and third class-consonants ( i.e., in doubling they take the form of the first and the third class-consonants respectively ).

नानुस्वारः ॥ १०९ ॥

Anusvāra ( preceding a conjunct consonant ) is not ( doubled ).

सवर्णे ॥ ११० ॥

( Doubling does not take place ) when a homogeneous ( consonant ) follows.

ऋवर्णे ॥ १११ ॥

( Doubling does not take place ) when ṛ follows.

लवर्णे ॥ ११२ ॥

( Doubling does not taāe place ) when ḷ follows.

यमे ॥ ११३ ॥

When a Yama follows, ( doubling does not take place ).

विसर्जनीयः ॥ ११४ ॥

Visarjanīya ( is not doubled ).

स्ववर्गीये चानुत्तमे ॥ ११५ ॥

( Doubling does not take place ) when a consonant of the same class, with the exception of the fifth consonant, follows.

अवसितं च ॥ ११६ ॥

( Also a consonant ) in pause ( is not doubled ).

नान्तःपदे स्वरपञ्चमान्तःस्थासु ॥ ११७ ॥

( Whatever is prescribed in the following ) does not take place in the interior of a word, when a vowel or a fifth class-consonant or a semi-vowel follows.

स्पर्शोऽपञ्चमः स्वरधौ तृतीयम् ॥ ११८ ॥

A contact consonant, with the exception of the fifth class-consenants, is changed into a third class-consonant, when a vowel or Dhi-consonants ( i.e., the last three of class-consonants and *y*, *r*, *l*, *v*, *h* ) follow.

## जिति प्रथमम् ॥ ११९ ॥

( A contact consonant, with the exception of the fifth class-consanants, ) is changed into the first class-consonant, when जित् consonants ( i.e., the first two of each class-consonants and *ś*, *ṣ*, *s* ) follow.

## असस्थाने ञुदि द्वितीयं शौनकस्य ॥ १२० ॥

( A contact consonant, with the exception of the fifth of each class, ) is changed into a second class-consonant according to शौनक, when a ञुत् consonant ( i.e., *ś ṣ* or *s* ), not of the same place of articulation, follows.

## पञ्चमे पञ्चमम् ॥ १२१ ॥

( A contact consonant, with the exception of the fifth of each class, ) is changed into a fifth class-coneonant, when a fifth contact consonant follows.

## हश्च तस्मात् पूर्वचतुर्थम् ॥ १२२ ॥

And *h*, following that ( i.e., the third class-consonant in place of a contact consonant other than the fifth of each class ), is changed into the fourth of the preceding contact consonant.

## नकारपरो जातूकर्ण्यस्य ॥ १२३ ॥

( But *h* ) followed by *r* ( is ) not ( changed into the fourth of the preeeding contact consonant ) according to Jātūkarṇya, ( nor is the preceding contact consonant changed into the third ).

## हि ॥ १२४ ॥

Here ends the second section of the Euphonic modifications.

## यवयोः पदान्तयोः स्वरमध्ये लोपः ॥ १२५ ॥

Final *y* and *v*, when between two vowels, are dropped.

न वकारस्यासस्थान एकेषाम् ॥ १२६ ॥

According to some teachers, ( final ) *v* ( is ) not ( dropped ), when ( a vowel ) not having the same place of articulation follows.

असौ च शाकटायनः ॥ १२७ ॥

( Final *v* of ) the word असौ ( is not dropped ) aacording to Śākaṭāyana ( when a vowel not having the same place of articulation follows ).

प्रउगमिति यकारलोपः ॥ १२८ ॥

*Y* is dropped in the cambination प्रऽउगम्.

अनादेशेऽविकारः ॥ १२९ ॥

In the following, if there is no special instruction, ( the accent ) remains as it is.

प्रागुवर्णादक्षराणामेकीभावः ॥ १३० ॥

( In the following Sūtras ) coalescence of ( accented ) vowels ( is to be understood ) upto Sūtra No. 135 which begins with *u*.

स्वरितवान् स्वरितः ॥ १३१ ॥

(The coalescence of vowels, ) of which one is circumflex, is circumflex.

उदात्तवानुदात्तः ॥ १३२ ॥

(The coalescence of vowels,) of which one ir acute, is acute.

इवर्णमुभयतोह्रस्वमुदात्तपूर्वमनुदात्तपरं स्वरितम् ॥ १३३ ॥

(A coalescence of ) two short *i* vowels, of which the first is acute and the latter is grave, is circumflex.

वीक्षितायेति च ॥ १३४ ॥

( The coalescence of two *i* vowels in ) वीक्षिताय also ( is circumflex ).

उदात्ताच्चानुदात्तं स्वरितम् ॥ १३५ ॥

A grave following an acute is changed) into cireumflex.

निहितमुदात्तस्वरितपरम् ॥ १३६ ॥

( But that circumflex is changed) into a grave, if followed by an acute or a circumflex.

अनवग्रहे ॥ १३७ ॥

( The above change ) does not take place in अवग्रह ( according to some ).

स्वरितस्य चोत्तरो देशः प्रणिहन्यते ॥ १३८ ॥

The last part of a circumflex becomes grave, (when followed by an acute or a circumflex, according to some ).

स्वरितात्परमनुदात्तमुदात्तमयम् ॥ १३९ ॥

A grave following a circumflex is ( heard ) like an acute ( which is called प्रचय or एकश्रुति ).

अनेकमपि ॥ १४० ॥

Even more than one ( grave syllables following the circumflex are heard like an acute ).

नोदात्तस्वरितोदयम् ॥ १४१ ॥

( But ) not (that syllable) which is followed by an acute or a circumflex.

द्विवर्णमेकवर्णवद्धारणात् स्वरमध्ये समानपदे ॥ १४२ ॥

A conjunction of two ( consonantal ) sounds, occurring between two vowels in the interior of a word, owing to their holding fast ( धारणात् ), ( is to be pronounced ) as one sound.

ऐकारौकारौ च ॥ १४३ ॥

*Ai* and *au* also, ( though consisting of two sounds, are to be pronounced as one sound ).

डढौ ळळ्हावेकेषाम् ॥ १४४ ॥

*Ḍ* and *ḍh* ( between vowels and in the interior of a word ) ( are changed ) into ळ् and ळ्ह् according to some.

द्विसकारं शासस्व रासस्वेति ॥ १४५ ॥

शास्स्व and रास्स्व, each of these two words consists of two *s* sounds.

ऋलवर्णे रेफलकारौ संश्लिष्टावश्रुतिधरावेकवर्णौ ॥ १४६ ॥

*R* and *l* are united together respectively in *ṛ* and *ḷ* vowels. They, having no distinct sounds, are to be treated as ( parts of ) the same sound ( with *ṛ* and *ḷ* ).

मात्रार्धमात्राणुमात्रा वर्णापत्तीनाम् ॥ १४७ ॥

Sounds which take the place of other sounds have their duration as one mora or half a mora or one fourth of a mora.

अनुस्वारो ह्रस्वपूर्वोऽध्यर्धमात्रा पूर्वा चार्धमात्रा ॥ १४८ ॥

An Anusvāra, preceded by a short vowel, is of one and a half mora and the preceding short vowel is of half a more.

दीर्घादर्धमात्रा पूर्वा चाध्यर्धा ॥ १४९ ॥

An Anusvāra, following a long vowel, is of half a mora, while the prceding long vowel is of one more and a half.

द्वियकारम् ॥ १५० ॥

( Now ) of the words having double *y* sounds :—

आप्याय्यमानो यमो रय्यै धाय्यारूपं श्रवाय्यं नृपाय्यं पौरुषेय्या हृदय्याय सहरय्या निचाय्य सान्नाय्य सन्ताय्येति च ॥ १५१ ॥

The words आप्याय्यमानो यमः, रय्यै, धाय्यारूपम्, श्रवाय्यम्, नृपाय्यम्, पौरुषेय्याः, हृदय्याय, सह-रय्या, निचाय्य, सान्नाय्य and सन्ताय्य ( contain double *y* sounds ).

एकः ॥ १५२ ॥

( Now of words having only ) one ( *y* as part of a conjunct consonant ) :—

ज्योतिश्च्यवनः श्येनः श्यामं श्यामाकाः श्येतो ज्येष्ठो ज्योग् ज्याच्छयति ॥ १५३ ॥

The words ज्योतिः, च्यवनः, श्येनः, श्यामम्, श्यामाकाः, श्येतः, ज्येष्ठः, ज्योक्, ज्या, आछ्यति ( have only one *y* as part of the conjunct consonant ).

जुषस्व यविष्ठ्य शोचा यविष्ठ्येति च ॥ १५४ ॥

जुषस्व यविष्ठ्य and शोचा यविष्ठ्य also ( have only one *y* as part of the conjunct consonant ).

स्येति ण्यत्वं च ॥ १५५ ॥

स्य and ण्य ( these two ) also ( have one *y* as part of the conjunct consonant ).

स्वरपूर्वाश्च शचजाः समानपदे द्विरुक्ताः ॥ १५६ ॥

When *ś, c, j,* preceded by a vowel in the interior of the same word, are doubled, ( they are followed by one *y*, as part of the conjunct consonant ).

व्यञ्जनपराश्च न ॥ १५७ ॥

( But ) when followed (or preceded) by a consonant, ( they, i.e., *ś, c, j* are doubled, ) they do not ( go with *y* ).

कश्यपस्यानार्षेये जातूकर्ण्यस्य ॥ १५८ ॥

When not referring to a Ṛṣi the word कश्यप ( has no *y* ) according to Jatūkarṇya.

उच्चैरज्जुमज्जानश्च ॥ १५९ ॥

The words उच्चैः, रज्जु and मज्जन् also ( have no *y* ).

मर्त्तों वुरीत मर्त्तेष्वग्निः परो मर्त्तस्ते मर्त्त इति च ॥१६०॥

In the instances मर्त्तों वुरीत, मर्त्तेष्वग्निः, परो मर्त्तः and ते मर्त्तः also ( the word मर्त्त is without *y* ).

अन्तःपदेऽपञ्चमः पञ्चमेषु विच्छेदम् ॥ १६१ ॥

In the interior of a word a contact consonant with the exception of the fifth consonants becomes its own twin ( =विच्छेद ), when a fifth class-consonant follows.

ऊष्मभ्यः पञ्चमेषु यमापत्तिर्दोषः ॥ १६२ ॥

When fifth class-consonants follow breathings, it is a fault to substitute a Yama ( in place of a fifth contact consonant ).

स्फोटनं च ककारवर्गे वा स्पर्शात् ॥ १६३ ॥

When a *k*-class consonant follows a contact consonant ( it is a fault ) optionally to pronounce the two consonants separately (or, it is a fault optionally to break their conjunction).

स्वरात् स्वरे समानपदे जो यं न तु ऋकारे ॥ १६४ ॥

*J* following a vowel is (optionally) pronounced as *y*, when a vowel follows in the same word, but not when ऋ follows.

ख्यातेः खयौ कशौ गार्ग्यः सख्योख्यमुख्यवर्जम् ॥ १६५ ॥

*Kh* and *y* in the root ख्या become *k* and *ś* respectively according to Gārgya, with the exception of the words सख्य, उख्य and मुख्य.

त्रिपदाद्यावर्तमाने संक्रमः ॥ १६६ ॥

संक्रम ( i.e., bringing together of two distant words in the *Krama* ) takes places when three or more words repeated in the Saṁhitā text ( are passed over ).

द्विपदैकपदान्यप्यनुवाके ॥ १६७ ॥

In the same अनुवाक even two words or even a single word ( when repeated ) is passed over ( in the *krama* ).

अनन्तरे ॥ १६८ ॥

( The repetition of words referred to in the preceding two Sūtras should be ) immediate ( as regards the sense or words ).

अपराङ्गे ॥ १६९ ॥

( And ) it should belong to other words.

अस्वरविकारे ॥ १७० ॥

( And ) there should be no change of accentuation in it.

अलिङ्गविकारे ॥ १७१ ॥

( And ) there should be no change of gender.

असमाने ॥ १७२ ॥

( And ) the repetition should not refer to the same object.

त्रिरावृत्ते ॥ १७३ ॥

[ संक्रम ( i.e., meeting of two words in the *krama* by omitting those between ) takes place ] when (a word or two) are repeated ( at least ) thrice.

गूढे ॥ १७४ ॥

( संक्रम takes place even ) if ( the above thrice repetition ) is implied.

पदसमूहे ॥ १७५ ॥

( संक्रम takes place even ) if there is a continuous repetition of words.

संहितायां च ॥ १७६ ॥

( संक्रम takes place ) even ( with regards to the repetitions ) of the Saṁhitā text.

अवसानार्थं पुनर्ग्रहणम् ॥ १७७ ॥

( The repeated words ) are however retained for the sake of pause.

अविकारार्थं च ॥ १७८ ॥

( The repeated word is retained ) also with a view to avoid euphonic modification.

उत्सर्गश्च ॥ १७९ ॥

Even the non-observance ( of the above rule is allowed according to some teachers ).

क्रमः स्मृतिप्रयोजनः ॥ १८० ॥

The purpose of the *krama* is ( to sustain ) the memory ( as regards the succession of words ).

द्वे द्वे पदे सन्दधात्युत्तरेणोत्तरमावसानादपृक्तवर्जम् ॥ १८१ ॥

With the exception of the Apṛkta ( i.e., a word consisting of only one letter ), one joins every two words ( into a *krama*-group ), the second one to the following, till the conclusion ( of the hemistich ).

अपृक्तमध्यानि त्रीणि स त्रिक्रमः ॥ १८२ ॥

( The *krama*-group consisting of ) three words, with the Apṛkta words ( आ and उ ) in the middle, is ( called ) **त्रिक्रम.**

पुनराकारेणोत्तरम् ॥ १८३ ॥

( After the **त्रिक्रम**, one ) again ( joins ) **आ** to the next (word).

मोषूणाभीषुणौ च ॥ १८४ ॥

**मो षू णः** and **अभी षु णः** also ( constitute **त्रिक्रम**-groups ).

चत्वार्यपृक्तपूर्वे नकारपरे सौ ॥ १८५ ॥

( One joins togelher ) four words ( into a *krama*-group ), when **सु** is preceded by an Apṛkta and is followed by *n.*

मकारपरे चैके ॥ १८६ ॥

Some ( teachers have a *krama*-group of four words ) even when ( **सु** ) is followed by *m.*

पुनः सुपदेनोत्तरम् ॥ १८७ ॥

( Then one ) again ( joins ) the word सु to the next ( word ).

पूर्वस्योत्तरसंहितस्य स्थितोपस्थितमवग्रह्यस्य ॥ १८८ ॥

The first word which is joined to the next word ( in a *krama*-group), if it is separable by an Avagraha in the Pada-text, (should be) repeated with इति interposed.

सुपदे शाकटायनः ॥ १८९ ॥

According to Śākaṭāyana the word सु, ( joined to the next word in a *krama*-group, should also be repeated with इति interposed ).

अन्तःपददीर्घीभावे ॥ १९० ॥

When there is a lengthening in the interior of the word, ( the first word joined to the next one in a *krama*-group is to be repeated with इति interposed ).

विनामे ॥ १९१ ॥

( So also ) in the case of cerebralisation.

प्रगृह्ये ॥ १९२ ॥

( So also ) in the case of a Pragṛhya word.

रिफितेऽनिरुक्ते ॥ १९३ ॥

( Also ) in the case of rhotacism of Visarjanīya not already explained.

अवसाने च ॥ १९४ ॥

Also (in the case of a word standing) in अवसान ( or pause ).

यथासमाम्नातं क्रमावसानं संक्रमेषु ॥ १९५ ॥

In the case of Saṅkramas ( however ), the pause in the *krama* is as it has been prescribed.

वृद्धं वृद्धिः ॥ १९६ ॥

( This treatise is ) great. (May it being) properity ( to those who study it ! )



# ADHYĀYA V

## समासेऽवग्रहो ह्रस्वसमकालः ॥ १ ॥

Avagraha takes place in a compound and is of the same duration as that of a short vowel.

## तरतमयोश्चातिशयेऽदक्षिणप्रत्यासङ्गे ॥ २ ॥

( Avagraha takes place ) when तर and तम, in the sense of superiority, follow and if there is no contiguity of the word दक्षिण.

## वीतमहूतमसूतमगोपातमरत्नधातमवसुधातमाः पूर्वेण ॥ ३ ॥

In the case of the words वीतम, हूतम, 'सूतम, गोपातम, रत्नधातम and वसुधातम ( however, Avagraha takes place ) after the first word ( i.e. the first member of the compound ).

## सर्वदेवजनेभ्यश्च ॥ ४ ॥

Also (in the compound) सर्पदेवजनेभ्यः.

## तूणवध्ममुत्तरेण ॥ ५ ॥

In the word तूणवध्मम्, ( Avagraha takes place ) beside the last word.

## रायस्पोषदे विजावेति च ॥ ६ ॥

And so (in the two compounds)—रायस्पोषदे and विजावा.

## बहुप्रकृतावागन्तुना पर्वणा ॥ ७ ॥

In (a compound) consisting of several members ( Avagraha takes place ) beside the word that cames lastly.

तद्धति तद्धिते न्यायसंहितं चेत् ॥ ८ ॥

( Avagraha takes place ) when a possessive Taddhita-suffix follows, if ( the word ) is an instance of a regular Sandhi.

शस्त्वंत्रातातिषु च ॥ ९ ॥

( Avagraha takes place ) also before (the तद्धित suffixes) शस्, त्वम्, त्रा and ताति.

धात्वर्थे यकारे स्वरपूर्वे ॥ १० ॥

( Avagraha takes place ) when *y*, preceded by a vowel and having a verbal sense, follows.

वांसौ च भूतकाले स्वरेण ह्रस्वादनुषि ॥ ११ ॥

( Avagraha takes place ) before ( the suffix ) वांस् having the sense of past tense and preceded by a short vowel; but not so when वांस् is changed into उष्.

प्रत्नपूर्वविश्वेमर्तुभ्यस्था ॥ १२ ॥

( Avagraha takes place ) before ( the suffix ) था, when it is preceded by प्रत्न, पूर्व, विश्व, इम, and ऋतु.

ह्रस्वव्यञ्जनाभ्यां भकारादौ विभक्तिप्रत्यये ॥ १३ ॥

( Avagraha takes place ) before a case termination beginning with *bh*, if it is preceded by a short vowel or a consonant.

स्विति चानतौ ॥ १४ ॥

( Avagraha takes place ) also ( before the case termination ) सु, if it is not cerebralised.

वर्णसङ्ख्येऽन्यतरतः ॥ १५ ॥

( Avagraha takes place ) optionally ( in a compound consisting of words meaning colour or number.

अनुदात्तोपसर्गे चाख्याते ॥ १६ ॥

( Avagraha takes place ) in a verbal form which is preceded by a preposition having grave accent.

गिरि त्रशयोः ॥ १७ ॥

( Avagraha takes place ) after the word गिरि, when त्र and श follow.

इवकाराम्रेडितायनेषु च ॥ १८ ॥

( Avagraha takes place ) when इव, कार, a repeated word and the word अयन follow.

एकात्समीची ॥ १९ ॥

The word समीची ( is separated by an Avagraha ), if preceded by the word एक.

त्वायवः शंयोर्बर्हिर्धास्मयुं मृन्मयीं सुम्नयाशुया साधुया धृष्णुया विशालमनुया ॥ २० ॥

The words त्वायवः, शंयोः, बर्हिर्धा, अस्मयुम्, मृन्मयीम्, सुम्नया, आशुया, साधुया, धृष्णुया, विशालम् and अनुया (are separated by an Avagraha).

मृगयुमुभयादतोऽपामार्गकिम्पूरुषमिति च ॥ २१ ॥

The words मृगयुम्, उभयादतः, अपामार्ग and किम्पूरुषम् ( are separated by an Avagraha ).

पारावतानाग्निमारुताश्चेति जातूकर्ण्यस्य ॥ २२ ॥

The two words पारावतान् and आग्निमारुताः ( are separated by an Avagraha ), according to Jātūkarṇya.

अधीवासमित्येके ॥ २३ ॥

The word अधीवासम् ( is separated by an Avagraha ), according to some teachers.

प्रतिषेधेनानवग्रहः ॥ २४ ॥

Avagraha does not take place in ( a compound ) with a word meaning prohibition.

उत्तरेण चाकारेण ॥ २५ ॥

Nor beside आ, following ( a word meaning prohibition ).

द्वापूर्वम् ॥ २६ ॥

( Avagraha does not take place in a compound ) beginning with the word द्वा.

संख्यापूर्वश्च धा ॥ २७ ॥

( Avagraha does not take place ) when धा is preceded by a word signifying number.

द्वन्द्वानि द्विवचनान्तानि स्वरान्तपूर्वपदानि ॥ २८ ॥

( Avagraha does not take place ) in co-ordinative compounds in dual number in which the first member ends in a vowel.

तद्धिते चैकाक्षरवृद्धावनिहिते ॥ २९ ॥

( Avagraha does not take place in a compound ) when in its first monosyllabic member वृद्धि takes place owing to a तद्धित suffix and when ( that member with वृद्धि ) is not separated ( from the second member ).

अञ्चतिसहत्योः कृल्लोपे ॥ ३० ॥

( Avagraha does not take place ) before the roots अञ्च् and सह्, when the कृत् suffix is dropped.

अनुरुसुभ्याम् ॥ ३१ ॥

( Those instances when ) उरु and सु precede ( the roots अञ्च् and सह् ) are an exception to the above rule ( i. e., the Avagraha takes place there ).

समिदाभ्यां वत्सरः ॥ ३२ ॥

( Avagraha does not take place (before the word वत्सरः when it is preceded by सम् and इदा.

प्राग्निभ्यामनिन्धौ प्रश्लेषे ॥ ३३ ॥

( Avagraha does not take place ) after प्र and अग्नि in the so-called contracted combination ( प्रश्लेषे ), excepting where the root इन्ध् follows.

पाङ्क्त्रानुद्द्रोऽब्भ्राय संशयात् ॥ ३४ ॥

The words पाङ्क्त्रान्, उद्द्रः, अब्भ्राय ( are not separated by Avagraha ) on account of doubt ( as to the nature of their constituent words ).

जनयत्या ओषधयो वृषायिषत नहि चनास्मभ्यमजावयो वलगम् ॥ ३५ ॥

( Avagraha does not take place in the words ) जनयत्यै, ओषधयः, वृषायिषत, नहि, चन, अस्मभ्यम्, अजावयः and वलगम्.

समानोऽनश्वमेधे ॥ ३६ ॥

( Avagraha does not take place in the word ) समान, excepting in Mantras belonging to the अश्वमेध seetion.

वायुरसजातः समुद्रमहोरात्रे विश्वानरो विश्वाहाग्रयणोऽसपत्ना गोधा गोधूमा आशुशुक्षणिर्न्यग्रोधः पुरोडाशः ग्रावणेभिरशीतम तस्करा मस्मसाश्वत्थ उपस्तिर्माकिर्विश्वामित्रो गोपां प्रउगमङ्गानि कक्षीवन्तमदधात्पवीरवन्नीहारेण प्रावृता घनाघन ईदृङ् चान्यादृङ् शूघनासः कुयवं कुचरः प्रियङ्गवो नीवारा एकादश षोडश चन्द्रमा आयुवो व्याघ्रोऽनड्वान् गविष्ठिरः कपर्दिने पुलस्तये निषङ्गिणे कुलालेभ्यः कर्मारेभ्यः पुञ्जिष्ठेभ्यो द्वीप्याय नीप्याय किंशिलायैलन्दृदाः शूकराय शूकृताय चराचरेभ्यः पारावतान् गोलत्तिकाखुरजगरो विपन्यवो दाक्षायणा आयुधं सुरामं बृहस्पतिर्वनस्पतिर्नराशंसः सुरभिर्नरिष्ठायै ॥ ३७ ॥

The words वायुः, असजातः, समुद्रम्, अहोरात्रे, विश्वानरः, विश्वाहा, आग्रयणः, असपत्नाः, गोधा, गोधूमाः, आशुशुक्षणिः, न्यग्रोधः, पुरोडाशः, ग्रावणेभिः, अशीतम्, तस्कराः, मस्मसा, अश्वत्थे, उपस्तिः, माकिः, विश्वामित्रः, गोपाम्, प्रउगम्, अङ्गानि, कक्षीवन्तम्, अदधात्, पवीरवत्, नीहारेण प्रावृता, घनाघनः, ईदृङ् चान्यादृङ्, शूघनासः, कुयवम्, कुचरः, प्रियङ्गवः, नीवाराः, एकादश, षोडश, चन्द्रमाः, आयुवः, व्याघ्रः, अनड्वान्, गविष्ठिरः, कपर्दिने, पुलस्तये, निषङ्गिणे, कुलालेभ्यः कर्मारेभ्यः, पुञ्जिष्ठेभ्यः, द्वीप्याय, नीप्याय, किंशिलाय,

ऐलबृदाः, शूकराय, शृकृताय, चराचरेभ्यः, पारावतान्, गोल्त्तिका, आखुः, अजगरः, विपन्यवः, दाक्षायणाः, आयुधम्, सुरामम्, बृहस्पतिः, वनस्पतिः, नराशंसः, सुरभिः, नरिष्ठायै ( are not separated by Avagraha ).

उत्तम्भनादीन्यादिसंशयात् ॥ ३८ ॥

( Avagraha does not take place in ) the words उत्तम्भन etc. on account of doubt ( as to the nature of the beginning of their second member ).

विशौजा इत्यन्यायसमासात् ॥ ३९ ॥

( Avagraha does not take place in ) the word विशौजाः on account of its being an irregular compound.

दित्यौही तुर्यौही पष्ठौही हृदयौपशेनेति च ॥ ४० ॥

Also in the words हित्यौही, तुर्यौही, षष्ठौही and हृदयौपशेन ( for the same reason ).

दुष्टरो विष्टरो विष्टपो विष्टम्भो विष्टम्भनीम् ॥ ४१ ॥

The words दुष्टरः, विष्टरः, विष्टपः, विष्टम्भः and विष्टम्भनीम् ( are not separated by Avagraha ).

ऊवध्यमुगणा उख इष्कृतिरिष्कर्तारमुदरमित्युपसर्गैकदेशलोपात् ॥ ४२ ॥

The words ऊवध्यम्, उगणाः, उखे, इष्कृतिः, इष्कर्तारम् and उदरम् ( are not separated by Avagraha ) on account of elision of a part of उपसर्ग.

सँस्कृतं सँस्कृतिर्माँस्पचन्याः पुँश्चलूमित्यनुनासिकोपधत्वात् ॥ ४३ ॥

The words सँस्कृतम्, सँस्कृतिः, माँस्पचन्याः, पुँश्चलूम् ( are not separated by Avagraha ) on account of nasalisation of the penultimate vowel therein.

अनुस्वारागमत्वादित्येके ॥ ४४ ॥

On account of the insertion of Anusvāra, according to some teachers.

परीत्तोऽवत्तानां सुवित्ताय सग्धिरिति च ॥ ४५ ॥

The words परीत्तः, अवत्तानाम्, सुवित्ताय and सग्धिः also ( are not separated by Avagraha ).

वृद्धं वृद्धिः ॥ ४६ ॥

( This treatise is ) great. ( May it bring ) prosperity ( to those who study it ! ).



# ADHYĀYA VI

अनुदात्तमाख्यातमामन्त्रितवत् ॥ १ ॥

A verb is grave like a vocative (i.e., under the same conditions as those mentioned in II. 17).

उपसर्ग उपसर्गे ॥ २ ॥

An Upasarga (= preposition) (is grave), when an Upasarga follows.

आम्रेडिते चोत्तरः ॥ ३ ॥

When there is a repetition (of an Upasarga), the latter (Upasarga is grave).

कृदाख्यातयोश्चोदात्तयोः ॥ ४ ॥

(An Upasarga is grave) when an acute, either in a word formed by a कृत् affix or in a verb, follows.

नाभ्येकाक्षरश्च स्वरसन्धेयेऽकृति ॥ ५ ॥

(The Upasarga) अभि and a monosyllabic (Upasarga are) not (grave), when a word which is to have a vowel combination follows, provided it is not formed with a कृत् affix.

आ पूतजातयोः ॥ ६ ॥

(The Upasarga) आ (is not grave) when the words पूत and जात follow.

अधि नि प्र प्रति श्रितात्रिणंभानवःपचतेषु ॥ ७ ॥

The Upasargas अधि, नि, प्र and प्रति (are not grave) when respectively the words श्रित, अत्रिणम्, and पचत follow.

उज्जेषमावर्तं आपनीफणत् संसनिष्यदत् संवतं प्रयाणं संचरन्तं संरभध्वं प्रसितिं विक्रमस्वेत्येतेष्वनु ॥ ८ ॥

( The Upasarga ) अनु ( is not grave ), when the words उज्जेषम्, आवर्त्तं, आपनीफणत्, सनिष्यदत्, संवतम्, प्रयाणम्, सञ्चरन्तम्, संरभध्वम्, प्रसितिम् and विक्रमस्व follow.

ओप प्रोदात्ते ॥ ९ ॥

आ and उप ( are not grave ), when acute प्र follows.

अभिप्रेह्युपसंप्रयात प्रत्यातनुष्वासुपाव ॥ १० ॥

( The first Upasarga in the words ) अभिप्रेहि, उपसम्प्रयात, प्रत्यातनुष्व and आसुवाव ( is not grave ).

कृत्याख्यातमाख्यातपूर्वम् ॥ ११ ॥

A verb preceded by a verb retains its own accent ( or, does not change its accent ).

उदात्ताच्चामन्त्रितादनन्तरम् ॥ १२ ॥

Also ( a verb ) immediately preceded by a vocative having acute accent ( does not change its accent ).

एकान्तरादपि ॥ १३ ॥

Also, when a word intervenes between the vocative and the verb.

यद्वृत्तोपपदाच्च ॥ १४ ॥

Also ( a verb ) adjoined ( in the same sentence ) to any form of the word यत् ( retains its own accent ).

हेश्च ॥ १५ ॥

Also ( a verb ) preceded by the word हि (retains its accent).

उत्तरेऽपि ॥ १६ ॥

Also, when ( the word हि ) follows it.

## नेत् ॥ १७ ॥

( Adverb) preceded by नेत् ( does not change its accent ).

## समनसस्करत् ॥ १८ ॥

करत्, preceded by समनसः, ( does not change its accent ).

## द्वयोः पूर्वं समुच्चये ॥ १९ ॥

When two ( verbs ) come together ( i.e., are joined by च ) the first ( retains its accent ).

## वा विचारणे ॥ २० ॥

( The first of the two verbs joined by ) वा, in the sense of deliberation, ( does not change its accent ).

## अह विनियोगे ॥ २१ ॥

( The first of the two verbs used with ) अह, in the sense of distribution, ( does not change its accent ).

## एवावधारणे ॥ २२ ॥

( The first of the two verbs used with ) एव, in the sense of restriction, ( does not change its accent ).

## उपपदाप्रयोगेऽपि च ॥ २३ ॥

Even if the words ( referred to above, i.e., च, वा, अह and एव ) are not used, ( the first of the two verbs does not change its accent ).

## परोपापाव प्रति पर्यन्वप्यत्यध्याङ् प्र सं निर्दुरुन्नि वि स्वभि ॥ २४ ॥

The Upasargas परा, उप, अप, अव, प्रति, परि, अनु, अपि, अति, अधि, आङ्, प्र, सम्, निर्, दुर्, उद्, नि, वि, सु and अभि (retain their accent).

## द्विस्पर्शम् ॥ २५ ॥

( In the following, the words ) 'consisting of two contact consonants' ( are to be taken as understood ).

वेत्तु विस्वास्मद्द्र्यक् पात्त्रमभि स्यम् मृत्तिका द्धं दात्त्रं समाववर्त्यृद्धिर्वृद्धिरराद्ध्या अर्द्धशुद्धबुद्ध नक्त्तं निषण्णस्विन्ना-न्नसन्नाश्च ॥ २६ ॥

The words वेत्तु, विस्वा, अस्मद्द्र्यक्, पात्त्रम्, अभि स्यम्, मृत्तिका, द्धम्, दात्त्रम्, समाववर्त्ति, ऋद्धिः, वृद्धिः, अराद्ध्यै, अर्द्धं, शुद्ध, बुद्ध, नक्त्तम्, निषण्ण, स्विन्न, अन्न, सन्न ( have two contact consonants ).

न क्षवृचिश्विसतयेभ्यस्त्रैकम् ॥ २७ ॥

त्र, preceded by क्ष, वृ, चि, श्वि, स, त, य, does not have two contact consonants.

इध्र्यायवार्ध्रीनसोद्राश्चराश्चेत् ॥ २८ ॥

The words इध्राय, वार्ध्रीनस, उद्र ( do not have two contact consonants ), if they signify movable objects.

उपोत्त्थित उत्त्तम्भनमुत्त्तभानोत्त्थायोत्त्थितायेति त्रीणि ॥२९॥

In the words उपोत्त्थितः, उत्त्तम्भनम्, उत्त्तभान, उत्त्थाय and उत्त्थिताय three ( contact consonants are joined together ).

वर्हिरङ्ङ्क्ताम् भद्रेण पृङ्ङ्क्तं पङ्ङ्क्तिः समङ्ङ्धि परिवृङ्ङ्धि पाङ्ङ्त्रानिति द्वावनुनासिकौ पूर्वावार-पन्तीवर्जमिति ॥ ३० ॥

In the words वर्हिरङ्ङ्क्ताम्, भद्रेण पृङ्ङ्क्तम्, पङ्ङ्क्तिः, समङ्ङ्धि, वरिवृङ्ङ्धि, पाङ्ङ्त्रान् two nasal consonants ( precede a contact consonant ), with the exception of आरपन्ती.

वृद्धं वृद्धिः ॥ ३१ ॥

( This treatise is ) great. ( May it bring prosperity ( to those who study it ! ).



# ADHYĀYA VII

## अथावसानानि ॥ १ ॥

Now with regard to the final letters ( with इति in परिग्रह = repetition with इति interposed ).

## कण्ठ्यस्वरमेकारेण परिगृह्णीयात् प्लुतवर्जम् ॥ २ ॥

One should change a guttural vowel ( i.e., *a* and *ā* ), with the exception of a प्लुत, ( together with *i* of इति ) to *e* in परिग्रह.

## इवर्णमीकारेण ॥ ३ ॥

( One should change final ) *i* ( i.e., *i* or *ī* ) ( together with *i* of the following इति ) to *ī* ( in परिग्रह ).

## उवर्णं वकारेण ॥ ४ ॥

( Final ) *u* ( is to be changed ) to *v* ( before इति in परिग्रह ).

## औकारं च ॥ ५ ॥

( Final ) *au* also ( is changed into आव् in परिग्रह ).

## ह्रस्वकण्ठ्योपधं विसर्जनीयान्तमरिफितं विवृत्त्या ॥ ६ ॥

A word ending in विसर्जनीय and preceded by a short guttural vowel ( i.e., *a* ), if not rhotacised, ( is intervened ) by a hiatus ( in परिग्रह ).

## दीर्घकण्ठ्योपधं विसर्जनीयान्तमेकारान्तमैकारान्तं प्लुतं प्रगृह्यं च ॥ ७ ॥

Also a word ending in विसर्जनीय, if preceded by a long gutteral vowel, or ending in *e* or *ai* or a प्लुत vowel or a प्रगृह्य vowel ( is intervened by a hiatus in परिग्रह ).

औकारान्तं चैके ॥ ८ ॥

Also a word ending in *au*, according to some.

भाव्युपधरिद्विसर्जनीयान्तानि रेफेण ॥ ९ ॥

Words ending in a rhotacised विसर्जनीय, preceded by a vowel other than a guttural vowel, ( are intervened ) by *r* ( in परिग्रह ).

प्रथमान्तं तृतीयेन ॥ १० ॥

A word ending in a first class-consonant is changed to a third class-consonant ( in परिग्रह ).

उत्तमान्तमुत्तमेन ॥ ११ ॥

A word ending in a fifth class-consonant remains unchanged ( in परिग्रह ).

वृद्धं वृद्धिः ॥ १२ ॥

( This treatise is ) great. ( May it bring ) prosperity ( to those who study it ! ).



## ADHYĀYA VIII

अथातो वर्णसमाम्नायं व्याख्यास्यामः ॥ १ ॥

Henceforth we shall expound the traditional alphabetic sounds.

तत्र स्वराः प्रथमम् ॥ २ ॥

First there are vowels.

अ इति आ इति आ ३ इति ॥ ३ ॥
इ इति ई इति ई ३ इति ॥ ४ ॥
उ इति ऊ इति ऊ ३ इति ॥ ५ ॥
ऋ इति ॠ इति ॠ ३ इति ॥ ६ ॥
ऌ इति ॡ इति ॡ ३ इति ॥ ७ ॥

They are : अ, आ, आ ३ । इ, ई, ई ३ । उ, ऊ, ऊ ३ । ऋ, ॠ, ॠ ३ । ऌ, ॡ, ॡ ३ ( and the diphthongs which follow : )

अथ सन्ध्यक्षराणि ॥ ८ ॥

Now the diphthongs.

ए इति ए ३ इति ॥ ९ ॥
ओ इति ओ ३ इति ॥ १० ॥
ऐ इति ऐ ३ इति ॥ ११ ॥
औ इति औ ३ इति ॥ १२ ॥

They are : ए, ए ३ । ओ, ओ ३ । ऐ, ऐ ३ । औ, औ ३.

इति स्वराः ॥ १३ ॥

These are the vowels.

अथ व्यञ्जनानि ॥ १४ ॥

Now the consonants.

किति खिति गिति घिति ङिति कवर्गः ॥ १५ ॥
चिति छिति जिति झिति ञिति चवर्गः ॥ १६ ॥
टिति ठिति डिति ढिति णिति टवर्गः ॥ १७ ॥
तिति थिति दिति धिति निति तवर्गः ॥ १८ ॥
पिति फिति बिति भिति मिति पवर्गः ॥ १९ ॥

They are : क् ख् ग् घ् ङ् : called k-class ;
च् छ् ज् झ् ञ् : called c-class ;
ट् ठ् ड् ढ् ण् : called *ṭ*-class ;
त् थ् द् ध् न् : called *t*-class ;
प् फ् ब् भ् म् : called *p*-class ;
(and also the following sounds : )

इति स्पर्शाः ॥ २० ॥

These ( i.e., क् to म् ) are the contact consonants.

अथान्तःस्थाः ॥ २१ ॥

Now the semi-vowels.

यिति रिति लिति विति ॥ २२ ॥

They are : य् र् ल् व्.

अथोष्माणः ॥ २३ ॥

Now the breathings.

शिति षिति सिति हिति ॥ २४ ॥

They are : श् ष् स् ह्.

अथायोगवाहाः ॥ २५ ॥

Now the Ayogavāhas ( i.e., which are not pronounced without the support of a vowel like *a* ).

अः इति विसर्जनीयः ॥ २६ ॥

अः is विसर्जनीय.

ᳵक इति जिह्वामूलीयः ॥ २७ ॥

ᳵ क is जिह्वामूलीय.

ᳶप इत्युपध्मानीयः ॥ २८ ॥

ᳶ प is उपध्मानीय.

अं इत्यनुस्वारः ॥ २९ ॥

अं is अनुस्वार.

हुँ इति नासिक्यः ॥ ३० ॥

हुँ is नासिक्य ( nasal sound ).

कुँ खुँ गुँ घुँ इति यमाः ॥ ३१ ॥

कुँ, खुँ, गुँ, घुँ are the Yamas ( twins ).

एते पञ्चषष्टिवर्णा ब्रह्मराशिरात्मा वाचः ॥ ३२ ॥

These 65 sounds constitute the whole mass of ब्रह्मन् ( Veda or sacred knowledge ); they are the soul of speech.

यत्किञ्चिद्वाङ्मयं लोके सर्वमत्र प्रयुज्यते ॥ ३३ ॥

Whatever relates to speech in the world, all that is based on these ( sounds ).

शुचिना ॥ ३४ ॥

( The Sacred Text should be studied ) by a pure person.

शुचौ देशे ॥ ३५ ॥

In a clean spot or place.

शूद्रपतितयोरसंश्रावं स्वाध्यायोऽध्येतव्यः ॥ ३६ ॥

One should study the Holy Text in a way that it is not within hearing of a शूद्र or an outcast.

ज्ञाने ॥ ३७ ॥

( Now ) as regards the knowledge ( of the Sacred Text ).

पौरुष्यम् ॥ ३८ ॥

स्वर्ग्यम् ॥ ३९ ॥

यशस्यम् ॥ ४० ॥

आयुष्यम् ॥ ४१ ॥

It is conducive to the object of human life ( or salvation ), heaven, fame and longevity.

अथापि भवति ॥ ४२ ॥

As it is also stated ( in the following )—

वेदस्याध्ययनाद् धर्मः संप्रदानात्तथा श्रुतेः ।
वर्णशोऽक्षरशो ज्ञानाद्विभक्तिपदशोऽपि च ॥ ४३ ॥

Spiritual merit is attained by the study and the teaching of the Veda, by hearing (it from the teacher) and knowing it letter by letter, syllable by syllable and word by word together with case-forms.

त्रयोविंशतिरुच्यन्ते स्वराः शब्दार्थचिन्तकैः ।
द्विचत्वारिंशद् व्यञ्जनान्येतावान्वर्णसंग्रहः ॥ ४४ ॥

Those who reflect on the nature of words and their meanings say that there are twenty-three vowels and forty-two consonants. This is the number of all sounds together.

तस्मिन् ळ्ळ्ह्जिह्वामूलीयोपध्मानीयनासिक्या
न सन्ति माध्यन्दिनानाम् ॥ ४५ ॥

लकारो दीर्घः प्लुताश्चोक्तवर्जम् ॥ ४६ ॥

Of those sounds ळ्, ळ्ह्, जिह्वामूलीय, उपध्मानीय, नासिक्य, long ऌ and प्लुत vowels, excepting those already mentioned, are not recognised by the Mādhyandinas (i.e., followers of the माध्यन्दिनी शाखा).

अथ वर्णदेवताः ॥ ४७ ॥

Now the deities of the alphabetic sounds.

आग्नेयाः कण्ठ्याः ॥ ४८ ॥

Guttural sounds have अग्नि as their deity.

नैर्ऋत्या जिह्वामूलीयाः ॥ ४९ ॥

जिह्वामूलीय sounds have निर्ऋति as their deity.

सौम्यास्तालव्याः ॥ ५० ॥

Palatal sounds have सोम as their deity.

रौद्रा दन्त्याः ॥ ५१ ॥

Dental sounds have रुद्र as their deity.

ओष्ठ्या आश्विनाः ॥ ५२ ॥

Labial sounds have अश्विनौ as their deity.

वायव्या मूर्धन्याः ॥ ५३ ॥

Cerebral sounds have वायु as their deity.

शेषा वैश्वदेवाः ॥ ५४ ॥

The rest have विश्वेदेवाः as their deity.

तत्समुदायोऽक्षरम् ॥ ५५ ॥

A group of those sounds is a syllable.

वर्णो वा ॥ ५६ ॥

A letter (i.e., a vowel sound) also (may constitute a syllable.)

अक्षरसमुदायः पदम् ॥ ५७ ॥

A Pada or word is constituted by a group of syllables.

अक्षरं वा ॥ ५८ ॥

Or a syllable alone ( may constitute a word ).

तच्चतुर्धा ॥ ५९ ॥

नामाख्यातोपसर्गनिपाताः ॥ ६० ॥

Words are of four kinds—नाम, आख्यात, उपसर्ग and निपात.

तत्र प्रतिविशेषः ॥ ६१ ॥

Now as regards their particular nature—

क्रियावाचकमाख्यातमुपसर्गो विशेषकृत ।
सत्त्वाभिधायकं नाम निपातः पादपूरणः ॥ ६२ ॥

A verb expresses an action; a preposition effects a defferentiation ( in meaning ); a noun denotes a being; a particle completes a Pāda.

चतुर्दश निपाता येऽनुदात्तास्तेऽपि सञ्चिताः ।
निहन्यते खल्वाख्यातमुपसर्गाणां चतुष्टये ॥ ६३ ॥

The fourteen Nipātas which have no acute accent have already been put together ( in Sūtra II. 16 ). A verbal form ( attached to Upasargas ) bears grave accept. ( This much ) as regards the four kinds of words.

अथ पदगोत्राणि ॥ ६४ ॥

Now the Gotras of the words—

भारद्वाजकमाख्यातं भार्गवं नाम भाष्यते ।
वासिष्ठ उपसर्गस्तु निपातः काश्यपः स्मृतः ॥ ६५ ॥

Verbs belong to the भारद्वाज गोत्र, nouns belong to the भार्गव गोत्र, Upasargas or prepositions belong to the वासिष्ठ गोत्र and particles belong to the काश्यप गोत्र.

अथ पद्देवताः ॥ ६६ ॥

Now the deities of the words—

सर्वं तु सौम्यमाख्यातं नाम वायव्यमिष्यते ।
आग्नेयस्तूपसर्गः स्यान्निपातो वारुणः स्मृतः ॥ ६७ ॥

All verbs have सोम as their deity. A noun has वायु as its deity. An Upasarga has अग्नि as its deity and a Nipāta has वरुण as its deity.

इत्याह स्वरसंस्कारप्रतिष्ठापयिता भगवान् कात्यायनः ॥ ६८ ॥

In this way this Treatise was propounded by भगवान् कात्यायन, the founder of accentuation and grammatical modification ( of words ).

वृद्धं वृद्धिः ॥ ६९ ॥

( This treatise is ) great. ( May it bring ) prosperity ( to those who study it ! )

